"त्वत्प्रीत्यर्थं सरस्वतीविनोदं कुर्मः"—पञ्चतन्त्रम्

सारदाविनोदे

श्रीमद्भट्टोजिदीक्षितविरचितायाः

# वैयाकरणसिद्धान्तकौमुद्याः

## द्वितीयो भागः

कारकसमासात्मकः

विद्यासागरविद्यालयाध्यक्षेण

श्रीसारदारञ्जनविद्याविनोदेन

कृतभाषान्तरः तत्कृतया मितभाषिणीसमाख्यया

व्याख्यया च समेतः

———o———

BHATTOJI DIKSHITA'S

# SIDDHANTA-KAUMUDI

## Vol II

KARAKA AND SAMASA

WITH TRANSLATION AND SANSKRIT COMMENTARY

BY

SARADARANJAN RAY VIDYAVINOD, M.A.,

PRINCIPAL, VIDYASAGAR COLLEGE

CALCUTTA

# PREFACE

This edition of the Siddhanta-Kaumudi is intended to serve two purposes as explained below.

More than 40 years ago I felt the need for an English Translation of Bhattoji Dikshita's Vritti on the rules of Panini. Editions are now available with English explanation of the rules and notes in English. These serve useful purposes undoubtedly, but, as they do not translate Bhattoji, the want, I felt then, still exists. The present edition is expected to meet this want.

Those who have read Bhattoji with some care, know that a literal translation of his Vritti, instead of helping the learner, will serve only to bewilder him. I have therefore tried in the following pages to translate Dikshita's thought instead of his words, trusting that thus alone I might be of service to such of our young men as intend to study Sanskrit Grammar but have not the opportunity to sit with a professor.

After I had commenced my work, some of my pupils asked me to begin with the second part, the part on Karaka and Samasa, which our B. A. candidates have to read for their Examination. I thought it would be odd for the second part to go out before the first and saw some of my friends on this point. The order in which the parts appeared, so long as their appearance was assured, was declared immaterial. My hesitation was removed, but Mahamahopadhyay Pandit Pramathanath Tarkabhushan gave altogether a new complexion to the undertaking itself. It was suggested that the scholarship

of Bengali Pandits was at a discount outside Bengal, and this was mainly because they did not study Panini's grammar. The study of Panini was a necessity more to the children of the Pandits of Bengal than to the English-knowing young men of India. In Bengal, an easy Sanskrit Commentary to the Siddhanta-Kaumudi was more urgently needed than an English Translation of Bhattoji. A commentary free from the technicalities of the system of Panini, so far as practicable, has to be written for our would be Pandits now studying at *Tols.* Existing commentaries are for those only who are already familiar with the mechanism of Panini's Grammar. I was requested accordingly to write a suitable Sanskrit Tika for beginners for my contemplated edition. The request was repeated and came from different quarters. The task was over-whelming for an old man with an incurable brain-disease. Yet, even with a full knowledge of my incapacity, I could not disregard the repeated requests of my esteemed friends and decided to try to add a commentary, with what result it is for my readers to say. If the commentary is deemed suitable, well and good ; if not, my readers will greatly oblige me by suggesting the course to follow. This is only one volume out of nine over which the work is calculated to extend,so there is ample time yet to mend.

I had occasion, here and there, to differ from existing commentaries and sometimes from the author also. The passages involve points of fundamental importance and I humbly and respectfully invite the attention of the learned public for an authoritative pronouncement on them.

In conclusion, I beg to express my indebtedness to Pandit Sitaram Sastri for valuable suggestions while reading the proofs.

CALCUTTA
August, 1920 } SARADARANJAN RAY

N. B.—When there is no danger of confusion, expressions like "कर्त्ता takes षष्ठी", "समानाधिकरण words", "masculine words" &c. will be freely used in the following pages instead of such precise but ponderous statements as "the word designating the कर्त्ता takes षष्ठी", "words designating things that are समानाधिकरण", "words applied to objects in the masculine" etc. By the bye, an English synonym for समानाधिकरण is a desideratum. I have ventured to coin a word ; 'collocative' for समानाधिकरण seems to serve the purpose well.

---

# मितभाषिणीकृतो विज्ञापना

नमस्कृत्य शिवं साम्बं प्रणम्य च गणाधिपम् ।
अभिवाद्य जगद्वन्द्यां वाणीं ज्ञानप्रदां तथा ॥ १ ॥
त्रिदिवस्थं नमस्कृत्य तातं श्रीश्यामसुन्दरम् ।
आचार्य्यं श्रीमहेशञ्च न्यायरत्नोपनामकम् ॥ २ ॥
सारदारञ्जनेनेयं दीक्षिताशयदीपनी ।
सिद्धान्तकौमुदीव्याख्या लिख्यते मितभाषिणी ॥ ३ ॥
विदुषां मतमालोच्य व्याख्यातॄणां पदे पदे ।
यदलं बालबोधाय तन्मात्रमिह कथ्यते ॥ ४ ॥
प्रौढ़ानां तु विनोदार्थमास्ते शब्देन्दुशेखरः ।
नागेशस्य तथा साध्वी दीक्षितस्य मनोरमा ॥ ५ ॥
ताभ्यामेव विजानन्तु धीराः सूक्ष्मेक्षिकां कवेः ।
ममेयं जायतां तेषां केवलं मार्गदर्शिनी ॥ ६ ॥
क्व दीक्षितवचोभङ्गी क्व चाहं विकलेक्षणः ।
क्षमन्तां सज्जनास्तन्मे चापलं रचितोऽञ्जलिः ॥ ७ ॥
अशेषदोषजुष्टेऽस्मिन् यद्येकोऽपि गुणोदयः ।
आलक्ष्येत बुधैर्नूनं लभेय कृतकृत्यताम् ॥ ८ ॥
विरुद्धमविरुद्धं वा पूर्वैरिह नवं वचः ।
यदुक्तं सादरं तत्र विदुषां मतमर्थये ॥ ९ ॥

———

अथ

# वैयाकरणसिद्धान्तकौमुदी

## द्वितीयो भागः

### सुबर्थप्रकरणे—प्रथमा

५३२। प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ २ । ३ । ४६ ॥

दीक्षितः। नियतोपस्थितिकः प्रातिपदिकार्थः (क)॥ मात्रशब्दस्य प्रत्येकं योगः (ख)। प्रातिपदिकार्थमात्रे, लिङ्गमात्राद्याधिक्ये, संख्यामात्रे च प्रथमा स्यात् (ग)। उच्चैः, नीचैः, कृष्णः, श्रीः, ज्ञानम् (घ)। अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्रे इत्यस्योदाहरणम् (ङ)॥

The sense of an uninflected word (प्रातिपदिक) is that which is invariably suggested by the sound of the word. The word मात्र is connected with each of the constituents of the द्वन्द्व that precedes it. *The first triad of case-affixes indicates the sense only of a* प्रातिपदिक ; *or, in addition, its gender only or measure only* ; *or it indicates a number only.* Thus उच्चैः &c. Uninflected words without gender, or restricted to one particular gender, are illustrations of प्रातिपदिकार्थमात्रे प्रथमा।

मितभाषिणी। (क) मूलतः शब्दो द्विधा भिद्यते प्रायेण—धातुः प्रातिपदिकञ्च। तत्र क्रिया नाम धात्वर्थः। प्रातिपदिकार्थं प्रति तु विप्रतिपत्तिर्दृश्यते, अतः समाधिमाह नियतेति। उच्चारिते प्रातिपदिके 'नियता' अव्यभिचारिणी 'उपस्थितिः'

प्राप्तिः, स्मरणमिति यावत् यस्य स एव 'प्रातिपदिकस्य अर्थः'। यमर्थं प्रातिपदिकं न व्यभिचरति स प्रातिपदिकार्थ इति फलितम्॥ (ख) सूत्रे प्रातिपदिकार्थश्च लिङ्गञ्च परिमाणञ्च वचनञ्च इति द्वन्द्वः। ततः अवधारणवाचिना मात्रशब्देन समासः। तत्र मात्रशब्दो द्वन्द्वान्ते श्रूयमाणः सन् प्रत्येकं द्वन्द्वाङ्गानि विशिनष्टि इत्याह मात्रशब्दस्येति॥ (ग) सूत्राक्षराणि व्याख्याय सूत्रार्थं व्याचष्टे प्रातिपदिकेति। इह आदिशब्देन परिमाणमात्रस्यापि ग्रहणम्। लिङ्गमात्रम् आदिर्ययोस्ते 'लिङ्गमात्रादिनी' लिङ्गमात्रं परिमाणमात्रञ्च इत्यर्थः। तयोः 'आधिक्ये' अतिरेके प्रथमा स्यात्॥ एवमिह चत्वारो विषयाः प्रथमायाः॥ एकस्तावत् प्रातिपदिकार्थमात्रम्। अत्र स्वार्थे प्रत्ययः। मिलितौ प्रकृतिप्रत्ययौ प्रकृतेरेवार्थं गमयतः, नाधिकं किञ्चित्॥ द्वितीयश्च येन केनचिल्लिङ्गमात्रेण युक्तः प्रातिपदिकार्थः। इह लिङ्गं प्रत्ययार्थः। प्रकृतिप्रत्ययौ मिलितौ प्रकृत्यर्थं लिङ्गञ्च बोधयतः॥ येन केनचित् परिमाणमात्रेण युक्तः प्रातिपदिकार्थस्तृतीयः। अत्र परिमाणं प्रत्ययार्थः। मिलितौ प्रकृतिप्रत्ययौ प्रकृत्यर्थं परिमाणञ्च गमयतः॥ संख्यामात्रं चतुर्थः। इहापि स्वार्थे प्रत्ययः॥ (घ) एतानि तु प्रातिपदिकार्थमात्रे प्रथमाया उदाहरणानि। ननु कृष्ण इति पुंस्त्वस्यापि बोधो जायते। तत् कथमिदं प्रातिपदिकार्थमात्रे इत्यस्योदाहरणं, न च लिङ्गमात्राधिक्यस्य? उच्यते—भगवति कृष्णशब्दः पुंस्येव नियतः। उच्चरितेऽस्मिन् शब्दे यथा भगवद्व्यक्तेरुपस्थितिर्नियता तथा पुंस्त्वस्यापि। तेनात्र 'नियतोपस्थितिकः प्रातिपदिकार्थः' इति कृत्वा लिङ्गमपि प्रातिपदिकार्थ एव, न च तत् प्रातिपदिकार्थात् वाह्यम्॥ एवं श्रीः, ज्ञानमित्यादिष्वपि॥ (ङ) उदाहरणेषु उच्चैर्नीचैरित्यव्ययं त्रिषु लिङ्गेषु समानमिति 'अलिङ्गम्'। कृष्णः, श्रीः ज्ञानमिति 'नियतलिङ्गाः' शब्दाः॥

**दीक्षितः। अनियतलिङ्गास्तु लिङ्गमात्राधिक्यस्य। तटः, तटी, तटम्।**

But of mere gender in excess ( लिङ्गमात्राधिक्य ) examples are furnished by words having more than one gender. Thus तटः &c.

**मितभाषिणी।** इहोदाहरणेषु या हि तटरूपा व्यक्तिः तटः इत्यनेन गम्यते, सैव तटी इति, तटमिति च। तत् तटरूपाया व्यक्तेर्बोधे लिङ्गस्योपस्थितिर्न नियता लिङ्गमत्र प्रातिपदिकार्थादधिकम्, प्रथमा च लिङ्गमात्राधिक्ये एव॥

दीक्षितः। परिमाणमात्रे द्रोणो व्रीहिः (क)। द्रोणरूपं यत् परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः (ख)। प्रत्ययार्थे परिमाणे प्रकृत्यर्थः अभेदेन संसर्गेण विशेषणम्। प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः (ग)॥

As an example of mere measure in excess we have द्रोणः in द्रोणो व्रीहिः। The sense here is—व्रीहि measured by the measure known as द्रोण। In द्रोणः, the affix सु means measure and the sense of the base द्रोण qualifies this sense by identifying it with द्रोण। The sense of the affix, thus modified, qualifies व्रीहिः being related to it as परिच्छेदक ( measurer ) is towards परिच्छेद्य (to be measured).

मितभाषिणी। (क) अत्र द्रोणशब्दस्य कोऽर्थः? 'द्रोणमानय' इत्युक्ते काष्ठभाजनं लौहभाजनं वा किञ्चिदानीयते येन शस्यानि मीयन्ते। तदेव भाजनं द्रोणशब्दस्य मुख्योऽर्थः। इह तु वाक्ये 'द्रोणः' इति 'व्रीहिः' इत्यस्य समानाधिकरणतया विशेषणम्। न जातु भाजनं किञ्चित् तथाविधं व्रीहिविशेषणं भवितुमर्हति। तेनात्र गौणवृत्तिराश्रीयते—द्रोणपरिमितो द्रोण इति। तथा हि अत्र द्रोणशब्दस्य यः प्रातिपदिकार्थो भाजनविशेष इति, तद्व्यतिरिक्तः परिमाणविशेष इत्यप्यर्थः प्रतीयते। नो चेत् कुतः परिमितिः? अतः प्रातिपदिकार्थात् परिमाणमात्रमत्राधिकम्। एतच्च 'द्रोणमानय' तथा 'द्रोणं व्रीहिमानय' इत्येतयोर्द्रोणशब्दस्य अर्थभेदपर्य्यालोचनया स्पष्टं भविष्यति। तदित्थं 'द्रोणः' इतीह परिमाणमात्राधिक्ये प्रथमा॥ (ख) यत्तु प्रागुक्तं व्रीहिसाहचर्य्यात् द्रोणशब्दस्य प्रातिपदिकार्थमात्रादधिकः कोऽप्यर्थः प्रतीयते इति, तदेवाह द्रोणरूपमित्यादिना। अयमाशयः—'द्रोणो व्रीहिः' इत्यत्र व्रीहिसाहचर्य्यात् 'द्रोणरूपं यत् परिमाणं तत्परिच्छिन्नः' इत्येतावत् सर्वं 'द्रोणः' इत्यनेन बोध्यते। कुतः पुनरेवंविधो बोधस्तदनुपदं वक्ष्यते॥ (ग) परिमीयते अनेनेति परिमाणम्। करणे घञ्। 'प्रत्ययस्य' सुप्रत्ययस्य 'अर्थः परिमाणम्'। तस्मिन्नर्थे 'प्रकृतेः' द्रोणशब्दस्य 'अर्थः' भाजनविशेषरूपः 'अभेदेन संसर्गेण' अभिन्नतया वर्त्तमानः

सन् 'विशेषणम्'। सु-प्रत्ययसहचरिता द्रोणप्रकृतिः द्रोणादभिन्नस्य परिमाणस्य बोधिका इत्यर्थः। मतान्तरेणोच्यते—सुप्रत्ययः द्रोणप्रकृतौ परिमाणाधिक्यसमर्पक इति। एतेन द्रोण इति परिमाणाधिक्ये प्रथमाया उदाहरणं भवति। एतावता 'द्रोणरूपं यत् परिमाणं तत्' इत्येव 'द्रोणः' इत्यस्य अर्थो लभ्यते। तत्तु नालं 'व्रीहिः' इत्यस्य समानाधिकरणत्वेन 'द्रोणः' इत्यस्य प्रयोगाय। अत आह प्रत्ययार्थस्तु इति—'प्रत्ययस्य' सुप्रत्ययस्य य इत्थं द्रोणप्रकृतिसाहचर्य्यात् विशिष्टः 'अर्थो' जातः, द्रोणरूपं यत् परिमाणं तदिति, स 'तु व्रीहौ विशेषणं' व्रीहिं विशेषयति। कथं विशेषयति इत्याह—'परिच्छेद्यपरिच्छेदकभावेन' मानमेयतया विशेषयति। ननु कुत एषा मानमेयसम्बन्धप्रतीतिः? उच्यते—एष हि मानमेयसम्बन्धः प्रतीयते सत्यं, किन्तु नायं व्रीहिप्रकृतेर्द्रोणप्रकृतेर्वा अर्थः, न वा तत्रत्यस्य सुप्रत्ययस्य। व्रीहिरिति प्रातिपदिकार्थमात्रे प्रथमा, द्रोण इति परिमाणाधिक्यमात्रे। ततः परस्परसाहचर्य्यात् द्रोणपरिमितत्वं व्रीहेः, व्रीहिपरिमापकत्वञ्च द्रोणस्यावभासते। न हि प्रकृतिकृतं न वा प्रत्ययनिमित्तकमिदं सम्बन्धावभासनम्। वीरः पुरुष इत्यादाविव वाक्यार्थशक्तेर्विलासः किल सः।

**दीक्षितः। वचनं संख्या। एकः, द्वौ, बहवः। इह उक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम्।**

In the rule, वचन means number. Thus एकः &c. Here the sense being declared ( अभिहित ), the विभक्ति, *i. e.*, प्रथमा, is not available ; hence the express sanction of the प्रथमा विभक्ति।

मितभाषिणी। ननु संख्यावाचकानामेकत्वादिरेवार्थः। तत् प्रातिपदिकार्थमात्रे इत्येवात्र सिद्धा प्रथमा, किं पुनः सूत्रे 'वचन'-ग्रहणेन? उत्तरमाह उक्तार्थत्वादिति। एष निष्कर्षः—सूत्रेऽस्मिन् "अनभिहिते" (५३६—२।३।१) इत्यधिक्रियते। तेन अनभिहिते प्रातिपदिकार्थमात्रादौ प्रथमा स्यात्। प्रातिपदिकार्थस्य चाभिधानं व्यक्तिनिर्देश एव। 'वृक्षः' इत्युक्ते तु न काचिद्व्यक्तिर्निर्दिश्यते, तेन अनभिहितः प्रातिपदिकार्थः ततश्च प्रथमा—वृक्षः, शाखा, फलम्। इह तु संख्याशब्दैरभिहितत्वात्

प्रातिपदिकार्थस्य, अनभिहिते विहिता प्रथमा तेषु न प्राप्नोति। तद्विधिरेष विधीयते 'वचनमात्रे प्रथमा' इति। तदेव कथ्यते—'इह' संख्याशब्दे 'उक्तार्थत्वात्' अर्थस्य उक्तत्वात् अभिहितत्वात् अनभिहिताधिकारोक्तायाः 'विभक्तेः' प्रथमायाः 'अप्राप्तौ वचनं' पृथग्युक्तिः, सूत्रे इति शेषः।

## ५३३। सम्बोधने च ॥ २।३।४७॥

दी—। इह प्रथमा स्यात्। हे रामः।

In this matter also, *i. e.*, in the vocative, the first triad of case affixes should be used. Thus हे राम।

मित—। हे राम इत्युक्ते न केवलं रामव्यक्तेर्बोधः अपितु सम्बोधितायास्तस्याः। एवं प्रातिपदिकार्थव्यतिरिक्तं सम्बोधनमत्राधिकमिति पूर्वसूत्रेण अप्राप्ता प्रथमा विधीयते।

---

### सुबर्थप्रकरणे—द्वितीया

## ५३४। कारके ॥ १।४।२३॥

दी—। इत्यधिकृत्य—

Having taken up this word 'कारके' with a view to attach it to the rules that follow—

मित—। कारकमिति प्रसिद्धा पूर्वाचार्य्यसंज्ञा। तस्याः अनुवाद इह 'कारके' इति। करोतीति कारकम्, क्रियाया निर्वर्त्तकम्, येन विना क्रियानिर्वाहो न भवति तत्। तस्मिन्। जातावेकवचनम्। जातिश्च बहुव्यक्तिव्यापिनी, तेनेह साक्षादनुपलब्धमपि बहुत्वमर्थादायाति, निर्द्धारणञ्च सिध्यति। अतः 'कारके' इति 'कारकेषु मध्ये' इत्यर्थः। 'कारके' इति पदमधिकृत्य वक्ष्यमाणानि सूत्राणि प्रणीयन्ते। तेषु तेषु सूत्रेषु 'कारके' इति पदं योजनीयमिति भावः। भाष्यकारस्तु संज्ञायाः सिद्धतां नेच्छति। स हि 'कारके' इति प्रथमार्थे सप्तमी इत्याह. 'कारकम्' इति

चार्थः। एतेन कर्मादिकं सर्वमपि 'कारकम्' इति सिद्धा संज्ञा॥ करोति कर्मादिव्यपदेशं कारकम्, क्रिया इतत्र्यर्थः। 'कारके' क्रियायाम्। इत्यपि व्याख्यानान्तरं तस्यैव॥

## ५३५। कर्त्तुरीप्सिततमं कर्म॥१।४।४९॥

दी—। कर्त्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात्।

The कारक which the कर्त्ता (agent) wishes particularly to attain (reach) by the action (क्रियया) is named कर्मन्। [As remarked in the Mitabhashini above, Karakas are promoters of the action. These are six in all—कर्त्ता (nominative), कर्म (accusative), करणम् (instrumental), सम्प्रदानम् (dative), अपादानम् (ablative), अधिकरणम् (locative)].

मित—। 'कर्त्तुः इष्टतमम्' इत्यन्वयः। "क्तस्य च वर्त्तमाने" (६२५—२।३।६७) इति कर्त्तुरित्यत्र अनुक्ते कर्त्तरि षष्ठी। 'आप्तुं' व्याप्तुं लब्धुमित्यादि। कथमाप्तुम्? 'क्रियया'। तामेव क्रियां प्रति कर्मत्वम्। कारकमिति कर्मणः कारकसंज्ञां बोधयति। सूत्रेऽस्मिन्ननुवृत्तिलब्धं 'कारके' इति पदं योजनीयम्। "कारके कर्त्तुरीप्सिततमं कर्म" इति पूर्णं सूत्रशरीरम्। तेन कर्मापि कारकमेव। क्रियानिर्वर्त्तकानि तु षट्—कर्त्ता, कर्म, करणम्, सम्प्रदानम्, अपादानम्, अधिकरणञ्च। एतानि षट् कारकाणि।

दी—। 'कर्त्तुः' किम्? माषेष्वश्वं बध्नाति। कर्मण ईप्सिता माषा न तु कर्त्तुः।

Why add कर्त्तुः in the rule? Witness माषेषु &c.—ties the horse in a field of pulse—where माष is not reckoned as कर्म, because माष is the wished for of अश्व which is the कर्म and not the कर्त्ता।

मित—। कर्त्तुं क्रियया आप्तुमित्याद्युच्यते। क्रिया चेह 'बन्धनम्'। तया अश्व एव आप्तुमिष्यते कर्त्रा, न हि माषाः। तेन अश्वस्य कर्मता न माषाणाम्। बन्धन-क्रियाया अधिकरणं माषाः इति तत्र सप्तमी॥ इह कर्मणः क्रिया भोजनम्, तत्तु नोच्यते। यद्युच्येत, स्युरेव माषाः कर्म—माषान् भुङ्क्तामिति, माषा भुज्यन्तामिति वा, अश्वं बध्नातीति।

दी—। तमब्ग्रहणं किम्? पयसा ओदनं भुङ्क्ते।

Why is तमप् attached to ईप्सित? Witness पयसा &c.—The mere ईप्सित is not the कर्म, we have to see if it is the *most* ईप्सित। Here पयस् is added merely to improve the taste of ओदन। The latter is what is really intended to eat (ईप्सिततम) and is therefore the कर्म।

मित—। "कर्त्तुरीप्सितं कर्म" इत्येव किं नोक्तम्? "ईप्सिततमम्" इति तमप्-प्रत्ययेन कोऽर्थः सिध्यति? इति प्रश्नः। पयश्च ओदनश्च द्वे अपि भोजनक्रियया व्याप्तुमिष्येते, परन्तु ओदन एवात्र भोजने प्रधानम्, संस्कारकमात्रं पय इति ईप्सित-तमत्वमोदनस्यैव न पयसः, तेन पय इति करणं न कर्म।

दी—। 'कर्म' इत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम्। अन्यथा गेहं प्रविशति इत्यत्रैव स्यात्।

Though the word कर्म runs through the context, still कर्म is repeated here to bar the word आधार which too is in the run; otherwise कर्मसंज्ञा would attach to an आधार only, as in cases like गेहं प्रविशति।

मित—। इह "आधारोऽधिकरणम्" (६३२—१।४।४५), "अधिशीङ्स्थासां कर्म" (५४२—१।४।४६), "अभिनिविशश्च" (५४३—१।४।४७), "उपान्वध्याङ्-वसः" (५४४—१।४।४८), "कर्त्तुरीप्सिततमं कर्म" इति पाणिनिग्रन्थक्रमः। एषु सूत्रेषु "अधिशीङ्—" इत्यतः 'कर्म', इत्यनुवर्त्तते। तत् "कर्त्तुरीप्सिततमम्" इत्ये-

तावदेवास्तु सूत्रम्, 'कर्म' इत्यनुवृत्तेरेव लभ्यते। तत्राह—सत्यमनुवर्त्तते 'कर्म' इति, परन्तु प्रथमसूत्रात् 'आधारः' इत्यप्यनुवृत्तम्। ततश्च "कर्त्तुरीप्सिततममाधारः कर्म" इति सूत्रं सम्पूर्य्यते, कर्मसंज्ञा च कर्त्तुरीप्सिततमस्य आधारस्यैव भवति, न हि ईप्सिततममात्रस्य। तेन 'गेहं प्रविशति' इत्याधारस्य कर्मसंज्ञा जायते 'ओदनं भुङ्क्ते' इत्यादिकन्तु न सिध्यति। 'कर्म' इति पुनरुच्यमाने हि अनुवृत्तिविच्छेदः प्रतीयते, 'आधारः' इति च निवर्त्तते॥

ननु 'मधुरं भाषते' इत्यत्र कथं कर्मता? उच्यते—यत् मधुरं तत् भाषणक्रियया व्याप्यते, तेन मधुरमिति कर्म। सामान्ये नपुंसकम्॥ एवं कृत्वा क्रियाविशेषणानां कर्मत्वे नपुंसकलिङ्गत्वे च सिद्धे, मन्ये "क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च वक्तव्यम्" इति वार्त्तिकं नोपन्यस्तं दीक्षितेन॥

## ५३६। अनभिहिते॥२।३।१॥

दी—। इत्यधिकृत्य—

Having taken up the word अनभिहिते ( if not identified )—

मित—। अभिहितमुक्तम्, विशेषवचनेन अङ्गुल्यादिना वा प्रदर्शितम्। न तथा अनभिहितम्। इतः प्रभृति या द्वितीयादयो विभक्तयः कथ्यन्ते ता अनभिहितेषु कर्मत्वादिषु आसञ्जनीयाः। इदं कर्म, इदं करणमित्यादिभिः स्फुटोक्तिभिर्यदा न प्रत्यक्षं कर्मादि, तदा तत् द्वितीयादिभिर्विभक्तिभिर्लिङ्गैरनुमेयमित्यर्थः।

## ५३७। कर्मणि द्वितीया॥२।३।२॥

दी—। अनुक्ते कर्मणि द्वितीया स्यात्। हरिं भजति (क)। अभिहिते तु कर्मणि 'प्रातिपदिकार्थ...मात्रे—' (५३२—२।३।४६) इति प्रथमैव (ख)।

The second triad of case-affixes should be attached to a कर्म when not expressly declared. If, however, the कर्म is declared—identified—saying 'This is the कर्म' the thing identi-

fied will have प्रातिपदिकार्थ only, and will appear with the प्रथमा विभक्ति। This is true of the identification of करण, सम्प्रदान &c. also.

मित—। (क) "अनभिहिते कर्मणि द्वितीया" इति पूर्वं सूत्रम्। अनभिहिते अनुक्ते। तदाह 'अनुक्ते' इत्यादि। भजतीति कर्त्तरि तिङा कर्त्ता उच्यते, कर्म अनुक्तम्। तेन 'हरिम्' इति अनभिहिते कर्मणि द्वितीया। (ख) 'भजनक्रियायाः किं कर्म' इति प्रश्ने 'भजनक्रियाया हरिः कर्म' इति कर्मणः स्फुटाभिधानमेव प्रतिवचनम्। एवं वाक्येन उक्ते कर्मत्वे कर्मविभक्तिर्द्वितीया निवर्त्तते प्रातिपदिकार्थमात्रं शिष्यते, ततः प्रथमा। एवं करणादिष्वप्यभिहितेषु।

**दी—। अभिधानञ्च प्रायेण तिङ्कृत्तद्धितसमासैः। तिङ्—हरिः सेव्यते। कृत्—लक्ष्म्या सेवितः। तद्धितः—शतेन क्रीतः शत्यः। समासः—प्राप्त आनन्दो यं स प्राप्तानन्दः।**

Declaration again is generally made by तिङ्, कृत् and तद्धित affixes; and also by समास। Thus there is declaration of कर्म by तिङ् in हरिः सेव्यते; by कृत् in लक्ष्म्या सेवितः (हरिः); by तद्धित in शत्यः which means शतेन क्रीतः (यः सः); by समास in प्राप्तानन्दः the sense being प्राप्त आनन्दो यं (सः)—he unto whom joy has come.

मित—। 'प्रायेण' बाहुल्येन तिङादिभिरभिधानं भवति, क्वचिदन्यथापि॥ 'सेव्यते' इति कर्मणि लट्। ततस्तिङा उक्तं कर्म हरिरिति अभिहिते च तस्मिन् प्रथमा भवति॥ एवं 'सेवितः' इत्यत्रापि कृता क्तप्रत्ययेन कर्मण उक्तत्वात् हरिरिति प्रथमैव॥ 'शत्यः' इति शतेन कार्षापणेन यत् क्रयणं तस्य कर्म तद्धितेन यत्प्रत्ययेन उच्यते प्रथमा च भवति कर्मणि॥ 'प्राप्तानन्दः' इत्यत्र या प्रापणक्रिया तस्याः कर्मभूतो जनः समासेन उच्यते, उक्ते च कर्मणि प्रथमा भवति।

**दी—। क्वचिन्निपातेनाभिधानम्। यथा—"विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्"। साम्प्रतमित्यस्य हि 'युज्यते' इत्यर्थः।**

Sometimes the कर्म is declared by an indeclinable, as in "विषवृक्षोऽपि—"। साम्प्रतम्, the निपात here, means युज्यते which has कर्मणि लट् and declares the कर्म। असाम्प्रतम् being equivalent to न युज्यते, also declares the कर्म and gives प्रथमा to विषवृक्षः।

मित—। अव्ययभेदी निपातः तेन॥ 'युज्यते' इति रौधादिकात् कर्मणि लट्। युक्तं भवति इत्यर्थः, न्याय्यं भवतीति शेषः। विषवृक्षं छेत्तुं न्याय्यं न भवतीत्युदाहरणार्थः। 'विषवृक्षम्' इत्यनुक्ते कर्मणि द्वितीया॥ अथवा 'युज्यते' इति दैवादिकात् कर्त्तरि लट्। अध्यवस्यति, इच्छति इत्याद्यर्थः। विषवृक्षं छेत्तुं न इच्छति इत्युदाहरणार्थः। अस्मिन् पक्षे सुगमस्तुमुन्॥ उभयत्र 'असाम्प्रतम्' इत्यनेन अनभिहितमेव कर्म। किञ्च असाम्प्रतमिति निपात एव न। वर्द्धमानो हि 'असाम्प्रतम्' इति स्वरादिषु पठति न निपातेषु। तदिह अपिना निपाते नाभिधानमिति दीक्षित स्वाशयः। अनेकार्थत्वान्निपातानामभिधानशक्तिस्तेषां स्यादिति न चित्रम्। "क्रमादमुं नारद इत्यबोधि सः" इत्यादिषु इतिशब्दस्य तादृशी-शक्तिर्दृश्यते, तत् अपिशब्दस्य चेह दृश्यताम्॥ वस्तुतस्तु नेह निपातेनाभिधानम्। 'युज्यते' इति यस्तिङ् प्रदर्शितस्तेनैवाभिहितं कर्म। तथाहि—स्वयं संवर्द्ध्य विषवृक्षमपि छेत्तुं न युनक्ति (जनः) इत्यस्य कर्मणिवाच्ये विषवृक्षश्छेत्तुं न युज्यते (जनेन) इति रूपम्। अर्थतः किलाभिधानम्। तेन असाम्प्रतमित्यत्रान्तर्भूतेन तिङा अभिधानं भविष्यति।

## ५३८। तथायुक्तञ्चानीप्सितम् ॥१।४।५०॥

दी—। ईप्सिततमवत् क्रियया युक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात्। ग्रामं गच्छंस्तृणं स्पृशति। ओदनं भुञ्जानो विषं भुङ्क्ते।

A कारक, though other than the wished for, is still called कर्म if it is affected by the action as if it were the wished for. Thus ग्रामम् &c.—Treads on grass while going to the village; ओदनम् &c.—Eats poison while eating meal. Here तृणं स्पृशति and विषं भुङ्क्ते are the examples; ग्रामं गच्छन् and ओदनं भुञ्जानः are

added only to show that तृण and विष are अनीप्सित। But though अनीप्सित, they are affected by स्पर्शनक्रिया and भोजनक्रिया in the same way as if they were ईप्सिततम। Hence they are कर्म।

मित—। 'तथा' तेन प्रकारेण ईप्सिततमप्रकारेण 'युक्तं' क्रियया व्याप्तम्। अनीप्सितमिति पर्य्युदासः, यदन्यदीप्सितादित्यर्थः। तेन द्वेष्योदासीनयोः संग्रहः। तृणमित्युदासीनं विषमिति द्वेष्यम्। तृणं स्पृशति इत्युदासीनेऽपि तृणे तथैव स्पर्शनक्रियायोगी यथा तृणे ईप्सिते, इति कर्मत्वं द्वितीया च। ग्रामं गच्छन्नित्येतत्तु ज्ञापकमात्रमनीप्सिततायास्तृणस्य, न हि उदाहरणाङ्गम्। तथा विषं भुङ्क्ते इत्येव द्वेष्यस्योदाहरणम्, ओदनं भुञ्जान इत्यनीप्सितताज्ञापकमात्रं विषस्य।

## ५३९। अकथितञ्च ॥१।४।५१॥

दी—। अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्।

A कारक not desired to be called by any of the special names such as अपादान &c. is also called कर्म। In other words, when अपादान &c. are treated neither as such nor as any other कारक, but merely as a कारक in general, they are treated as कर्म। This option in the treatment is allowed only in certain special cases enumerated as below :—

मित—। सामान्यतः क्रियानिर्वाहकं कारकम्, अपादानादयस्तद्विशेषाः। अपादानादीनामपादानतादयो यदा न विवक्ष्यन्ते, प्रसिद्धकारकान्तरत्वेन वा नोपस्थाप्यन्ते तदेयं संज्ञा। 'कारके' इत्यस्ति, तेन अकथितमपि कारकमेव ॥ ननु तर्हि 'रिपून् हन्ति रणे' इत्यत्र अधिकरणत्वस्य अविवक्षया 'रिपून् हन्ति रणम्' इत्यस्तु। 'नटात् गाथां शृणोति' इत्यत्र च नटस्य अपादानत्वे अविवक्षिते अनेन कर्मत्वमस्तु, मा च भूत् भाष्यप्रयुक्ता 'नटस्य गाथां शृणोति' इति शेषलक्षणा षष्ठी। नैवम्, संज्ञेयं क्वचिदेव प्रवर्त्तते न सर्वत्र, तदाह—

दी—। दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमन्थ्मुषाम्।
कर्मयुक् स्यादकथितं तथास्यान्नीहृकृष्वहाम् ॥

दुहादीनां द्वादशानां नीप्रभृतीनां चतुर्णां कर्मणा यद् युज्यते तदेव अकथितं कर्म इति परिगणनं कर्त्तव्यमित्यर्थः।

The sense is—It has to be noted that अकथितं कर्म is but that which becomes connected with the कर्म of the twelve दुह्, याच् &c and of the four नी, हृ &c. These sixteen roots govern two accusatives. The ईप्सिततम is the मुख्यकर्म or प्रधानकर्म, and the अकथित is the गौण or अप्रधानकर्म।

मित—। 'कर्मणा' इति ईप्सिततमेन इत्यर्थः। तदेते षोड़श द्विकर्मका धातवः। ईप्सिततममेषामेकं कर्म, यच्च तेन युज्यते तदपरम् 'अकथितं' कर्म। प्रधानमिति मुख्यमिति च ईप्सिततमस्य संज्ञान्तरम्, अप्रधानमिति गौणमिति च अकथितस्य।

दी—। गां दोग्धिपयः। बलिं याचते वसुधाम्। अविनीतं विनयं याचते। तण्डुलानोदनं पचति। गर्गान् शतं दण्डयति। व्रजमवरुणद्धि गाम्। माणवकं पन्थानं पृच्छति। वृक्षमवचिनोति फलानि। माणवकं धर्मं ब्रूते शास्ति वा। शतं जयति देवदत्तम्। सुधां क्षीरनिधिं मथ्नाति। देवदत्तं शतं मुष्णाति। ग्राममजां नयति हरति कर्षति वहति वा।

Thus :—गां &c. In these the अकथित or अप्रधान कर्म is—गाम्, बलिम्, अविनीतम्, तण्डुलान्, गर्गान्, व्रजम्, माणवकम्, वृक्षम्, माणवकम्, देवदत्तम्, क्षीरनिधिम्, देवदत्तम्, ग्रामम् in order. व्रजमवरुणद्धि is for व्रजे अवरुणद्धि। माणवकं धर्मं ब्रूते means माणवकाय धर्मं ब्रूते। ग्राममजां नयति replaces ग्रामे अजां नयति &c.

मित—। 'पयः' इति प्रधानं कर्म। 'गौः' इत्यपादानस्य अविवक्षया गामित्यप्रधानम्। वसुधामिति प्रधानं कर्म, बलिमित्यविवक्षितमपादानमप्रधानम्। तण्डुलान् इत्यविवक्षितं करणमपादानं वा। गर्गान् इत्यविवक्षितमपादानम्। व्रजमित्यविवक्षितमधिकरणम्। माणवकमित्यविवक्षितं सम्प्रदानमपादानं वा। वृक्षमित्यविवक्षितमपा-

दानम्। माणवकमित्यविवक्षितं सम्प्रदानम्। देवदत्तमित्यविवक्षितमपादानम्। तथैव चौरनिधिमिति देवदत्तमिति च। ग्राममित्यविवक्षितमधिकरणम्।

**दी—। अर्थनिबन्धनेयं संज्ञा। बलिं भिक्षते वसुधाम्। माणवकं धर्मं भाषते अभिधत्ते वक्ति इत्यादि।**

The name अकथितं कर्म depends upon the sense of the roots in the list दुह्याच् &c. Thus बलिं भिक्षते &c, Like the sixteen roots listed, roots synonymous with them also have an अप्रधान कर्म। Thus भिक्ष, भाष &c. also are द्विकर्मक।

मित—। न केवलं दुहादीनामेव अकथितं कर्म अस्ति, अपि तु तत्समानार्थकानामपि धातूनाम्। भिक्षभाषप्रभृतयोऽपि याचप्रभृत्यादय इव द्विकर्मकाः।

**दी—। 'कारकं' किम्? माणवकस्य पितरं पन्थानं पृच्छति।**

Why say कारकम्? Witness माणवकस्य &c. The act here is पृच्छा and is connected with पितृ and पथिन् only, माणवक taking no part in it. Hence माणवक is no कारक and cannot be an अप्रधान कर्म, hence it takes षष्ठी।

मित—। अत्र पन्थाश्च पिता च पृच्छाक्रियाया निर्वर्त्तकौ। माणवकस्य तु क्रियायोगो नास्ति तदेतदकारकम्। शेषे चात्र षष्ठी।

**दी—। "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्" (वार्त्तिक)। कुरून् स्वपिति। मासमास्ते। क्रोशमास्ते।**

Place, time, action and the journey to be accomplished are designated कर्म in connection with intransitive verbs. Thus कुरून् &c.

मित—। ग्रामसमुदायो देशः। मासादयो लोकप्रसिद्धाः कालाः। भावः क्रिया, लक्षणया क्रियाव्याप्तः कालः। तस्य कालत्वेन लोके अप्रसिद्धेः पृथगुक्तिः। 'कर्मसंज्ञकः' अकथितकर्मसंज्ञकः। 'कुरून् स्वपिति' इत्यस्य 'कुरुषु स्वपिति' इत्यर्थः। 'कुरुषु' इत्यधिकरणम्। तस्य अविवक्षायां 'कुरून्' इत्यकथितं कर्म॥ एवमधिकरणस्य अविवक्षायामकथितकर्मत्वे 'मासमास्ते', विवक्षायां तु 'मासि आस्ते' इत्यादयः॥ इदं तावदकर्मकेषु अकथितकर्मत्वविधिविषयकं परिगणनम्। देशादयः किम्? बन्धूनां स्निह्यति। इह अविवक्षितेऽप्यधिकरणे 'नटस्य शृणोति' इतिवत् शेषलक्षणा षष्ठी एव न कर्मणि द्वितीया। अनेन हि वार्त्तिकेन अकर्मका अपि धातवो देशादिभिः सकर्मका भवन्ति। शास्त्रे पुनर्येषां देशादिभिन्नं कर्म नास्ति ते अकर्मका एव गृह्यन्ते। इह वार्त्तिके टीकाकृतो दीक्षितस्य मतं नाद्रियन्ते। ते च 'कुरून् स्वपिति' इत्यादिषु स्वापादिक्रियया कुर्वादयो व्याप्ता इति व्याख्याय "कर्तुरीप्सिततमम्—" (५३५—१।४।४९) इत्यनेनैव कुर्वादीनां कर्मत्वं वर्णयन्ति। एवमन्यत्रापि अकर्मकेषु व्याप्तिक्रियाया अन्तर्भावं परिकल्प्य वार्त्तिकस्यास्य विधिपरत्वमपलपन्ति। "भाव-कालाध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते।" तथाच नागेशो विवदते—

"यत्तु इदमेव कर्मसंज्ञाविधायकमिति, तन्न। भाष्ये तादृशवचनानुपलम्भात्। अकथितञ्चेति सूत्रे अकर्मकप्रकृतिकण्यन्तानां कथं द्विकर्मकत्वमिति शङ्कायां "काल-भावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां देशश्च" इति भाष्ये उक्तम्, तच्च न विधायकं, हिशब्दघटितत्वात्॥ किञ्च कालाध्वनोरिति सूत्रे…प्राकृतमेवैतत् कर्म…इत्युक्तम्। अस्य वचनत्वे 'उक्तं वा प्राकृतं वा' इति वदेत्॥…अतएव 'समां समां विजायते' इति सूत्रे समायां समायां विजायते इति विग्रहकथनपरं भाष्यं सङ्गच्छते। अन्यथा अनेन द्वितीयाया एव तत्र साधुत्वेन तदसङ्गतिः स्पष्टैव"॥ इति॥

अत्रोच्यते—इयमेव भाष्यकृतः शैलो यदसौ वार्त्तिकमुद्धृत्य व्याचष्टे। "कालभाव—" इतीदमपि व्याख्यातमेव तेन। "देशश्चाकर्मणाम्" इत्यपि पृथग्व्याख्यातम्। तदनयो-र्वार्त्तिकत्वे नास्ति सन्देहः। अनुमतञ्चैतद्द्वयं भगवतः, अन्यथा स "न वक्तव्यम्" इत्युक्त्वा प्रत्याचक्षीत॥ यत्तु हि-शब्दस्य "कर्मसंज्ञा हि" इत्यन्वयं परिकल्प्य वार्त्तिकस्यास्य

सिद्धपरता व्याख्याता तदकिञ्चित्करम्। "कालभावाध्वगन्तव्या हि" इत्येवमन्वये सति स्पष्टैव विधिपरता। वस्तुतस्तु अकथितसूत्रे "किमुदाहरणम्" इत्युदाहरण-प्रदर्शनं प्रक्रम्य "दुह्याचि—" इत्यादिना प्रदर्शिताः सकर्मकाः। ततः अनुक्तेष्वेव अकर्मकेषु प्रसङ्गात् प्राप्तो लादिविधिविचारः। तं समाप्य "कालभाव—" इति पुनरुपात्तं प्रदर्शनम्, अकर्मकाणाञ्च उक्तम्। तत उपसंक्रियते—"एतेन कर्मसंज्ञा सर्वा सिद्धा भवत्यकथितेन" इति। तत् "कालभावाध्वगन्तव्या हि" इत्येवाभिमतोऽन्वयः। अकर्मकप्रकृतिकण्यन्तानाम् इत्यादि तु मुद्रितेषु भाष्यपुस्तकेषु न दृश्यते। यदुक्तं "कालाध्वनोः—" इति सूत्रे "प्राकृतमेवैतत् कर्म" इति नोच्येत "उक्तं वा" इत्येवोच्येत इति तत्रेदं स्मर्त्तव्यम्—"अत्यन्तसंयोगे कर्मवद्भावार्थम्" इति हि तत्रत्येन वार्त्तिकेन कालाध्वनोः कर्मता अतिदिश्यते। तत्तु भाष्यकृदसहमानो वदति "प्राकृतमेवैतत् कर्म"—कालाध्वनोः कर्मत्वं प्राकृतमेव स्वाभाविकमेव किं पुनरनयोः कर्मतातिदेशेन इति। एतत्प्रसङ्गे "उक्तं वा" इति नितरामसम्बद्धम्। प्राक् तु "कर्मसंज्ञा ह्यकर्मणाम्" इति कर्मता एव उक्ता न कर्मवद्भावः, न चात्यन्तसंयोग-विषयकं किमपि॥ यदप्युच्यते विधिपक्षे "समायां समायाम्" इत्यस्य भाष्योक्तौ यकारलोपौ न सङ्गच्छते इति तदपि न। कर्मत्वविधिरयमकथितपक्षे एव इत्युक्तं प्राक्। इह पुनः समांसमीना शब्दे न केवलं विजननं विवक्षितम्, अपि तु समायां समायां विजननम्। अमरोऽप्याह "समांसमीना सा गौर्या प्रतिवर्षं प्रसूयते"। एवं समाशब्दस्य विवक्षिते अधिकरणत्वे कर्मता न प्राप्नोति। अत्यन्तसंयोगश्च नास्ति। तदिह आस्तां तावदसङ्गतिः "समायां समायाम्" इत्यत्र यलोपकरणादृते नान्या-गतिर्विद्यत एव काचित्॥

## ५४०। गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्त्ता स णौ ॥१।४।५२॥

**दी—। गत्याद्यर्थानां शब्दकर्मणामकर्मकाणाञ्च अणौ यः कर्त्ता स णौ कर्म स्यात्।**

Of roots meaning 'to go', 'to know', 'to eat' and of roots that have no कर्म or have शब्द for कर्म, the कर्त्ता before णिच् is

attached becomes the कर्म after the addition of णिच्। The णिच् here is *causal* not स्वार्थिक।

मित—। बुद्धिर्ज्ञानम्। प्रत्यवसानमाहारः। शब्दो यस्य कर्म कर्मकारकं स शब्दकर्मा। 'णि' इतीह हेतुमण्णिच्। अणौ अणिजन्तकाले यः कर्त्ता सः 'अणि-कर्त्ता'। 'कर्म' इत्यनुवर्त्तते तदाह 'स णौ कर्म स्यात्' इति।

दी—। शत्रूनगमयत् स्वर्गं वेदार्थं स्वानवेदयत्।
आशयच्चामृतं देवान् वेदमध्यापयद्विधिम्।
आसयत् सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः॥

Thus—Let my refuge be Hari who caused his enemies to reach heaven ( शत्रून् &c.—गति ), his kinsmen to grasp the sense of the Vedas ( वेदार्थम् &c.—बुद्धि ), the gods to taste nectar ( आशयत् &c.—प्रत्यवसान ), Vidhi to read the Vedas ( वेदम् &c.—शब्दकर्म ), the earth to rest in water ( आसयत् &c.—अकर्मक )। The Vedas are a collection of words ( शब्द )। Any thing read is शब्द, hence शिष्यं व्याकरणमध्यापयति is also an example.

मित—। उदाहरणान्याह—( गति ) शत्रवः स्वर्गमगच्छन्नित्यणिचि। णिचि, शत्रूणां कर्मत्वे उदाहरणम्॥ ( बुद्धि ) अणिचि, स्वा वेदार्थमविदुः। णिचि, स्वानां कर्मत्वम्॥ ( प्रत्यवसान ) देवा अमृतमाश्नन्। णिचि, देवानां कर्मता॥ ( शब्दकर्म ) विधिर्वेदमध्यैत। णिचि, विधेः कर्मता। 'वेद' इति शब्दमात्रम् अध्ययनस्य कर्म॥ ( अकर्मक ) पृथ्वी सलिले आस्त। णिचि, पृथ्व्याः कर्मता॥ अत्र अणिकर्त्तृकर्मणः प्रयोज्यकर्मेति नामान्तरम्। तदेते प्रयोज्यकर्मणा अकर्मकाः सकर्मका जाताः, सकर्मकाश्च द्विकर्मकाः॥

दी—। 'गति—' इत्यादि किम्? पाचयत्योदनं देवदत्तेन।

Why enumerate गति &c.? Witness—He causes food to be cooked by Devadatta. Here देवदत्तः पचति is the form without णिच्। Adding णिच् we get पाचयति in place of पचति। But the

तिङ् here is after पाचि and declares neither the कर्त्ता of पचि nor its कर्म। Hence देवदत्तेन in the तृतीया, because पच is not in the गत्यादि list.

मित—। गत्यादिषु पचेरग्रहणात् अणिकर्त्तुः कर्मत्वं न भवति। णौ कृते पाचि इत्यत्र अन्तर्भूतः पचिः, ततो विभक्तेरप्राप्तौ नोक्तः कर्त्ता नापि कर्म। तेन अनुक्ते कर्त्तरि तृतीया, कर्मणि द्वितीया।

दी—। 'अण्यन्तानां' किम्? गमयति देवदत्तो यज्ञदत्तम्। तमपरः प्रयुङ्क्ते—गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः।

Why say अण्यन्तानाम्? Witness—Devadatta causes Jajnadatta to leave. In this, another man, Vishnumitra, urges Devadatta. Hence—Vishnumitra, through Devadatta, causes Jajnadatta to leave. गमयति having a ण्यन्त root, the nominative will not become the accusative if णिच् is again attached.

मित—। 'अणिकर्त्ता' इत्यतः 'अण्यन्तानाम्' इति लभ्यते। अणिकर्त्ता व्याख्यातं प्राक्। यद्वा—अविद्यमानः णिः हेतुमण्णिच् एषु अणयः अण्यन्ता धातवः। अणीनाम् अण्यन्तानां कर्त्ता अणिकर्त्ता। 'गमयति देवदत्तः' इति हेतुमण्णिच। पुनर्णिचि गमयति देवदत्तेन।

दी—। "नीवह्योर्न" ( वार्त्तिक )। नाययति वाहयति वा भारं भृत्येन।

कर्मसंज्ञा will not arise in the case of नी and वहि। Thus नाययति &c. कर्मसंज्ञा was expected because the roots are गत्यर्थ। The prohibition gives तृतीया in भृत्येन।

मित—। यथाकथञ्चित् गत्यर्थत्वात् प्राप्ता संज्ञा प्रतिषिध्यते।

दी—। "नियन्तृकर्त्तृकस्य वहेरनिषेधः" ( वार्त्तिक )। वाहयति रथं वाहान् सूतः।

The prohibition does not operate if वह्नि has a charioteer for कर्त्ता।

मित—। इह प्रतिषेधान्मुक्तौ यथाप्राप्ता अणिकर्तुः कर्मसंज्ञा भवति।

**दी—। "आदिखाद्योर्न" (वार्त्तिक)। आदयति खादयति वा अन्नं वटुना।**

कर्मसंज्ञा will not arise in the case of आदि and खादि।

मित—। प्रत्यवसानार्थत्वात् प्राप्ते प्रतिषेधः।

**दी—। "भक्षेरहिंसार्थस्य न" (वार्त्तिक)। भक्षयत्यन्नं वटुना। अहिंसार्थस्य किम्? भक्षयति बलीवर्दान् शस्यम्।**

कर्मसंज्ञा will not arise in the case of भक्षि if no malice is implied. Thus—He causes rice to be eaten by the boy. भक्ष is चुरादि and takes णिच् स्वार्थे not हेतुमति। Hence the कर्मसंज्ञा that was expected is prohibited. Why say 'no malice'? Witness—Makes the bullocks eat corn. The corn is another man's ; so there is malice in setting the bullocks at it.

मित—। भक्षिरिति स्वार्थिकणिच् न हेतुमण्णिच्। ततः प्राप्ता संज्ञा प्रतिषिध्यते। बलीवर्दानित्यत्र परकीयं शस्यमिति हिंसा गम्यते।

**दी—। "जल्पतिप्रभृतीनामुपसंख्यानम्" (वार्त्तिक)। जल्पयति भाषयति वा धर्मं पुत्रं देवदत्तः।**

The roots जल्पति &c. have to be included in the rule. Thus जल्पयति &c. Here the कर्म is धर्म which is not a mere word, but an injunction expressed by some complete sentence. Hence the root not being शब्दकर्म it is provided for separately.

मित—। जल्पति धर्मं पुत्रः इत्यणौ। जल्पयति धर्मं पुत्रमिति णौ जल्पत्यादयः शब्दक्रिया धातवः स्वभावादकर्मकाः। यदा पुनः शब्दो धर्मादिप्रति-

पादकी भवति तदा धर्मादीनां कर्मवद्भावो दृश्यते। तथा च "तं मैथिली वाक्यमिदं बभाषे" इति भाषतेर्द्विकर्मकत्वेन भट्टौ प्रयोगः। इह शब्दक्रियत्वादप्राप्ते पृथग्ग्रहणम्।

**दी—। "दृशेश्च" (वार्त्तिक)। दर्शयति हरिं भक्तान्। सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं न तु तद्विशेषार्थानाम्, इत्यनेन ज्ञाप्यते। तेन स्मरति जिघ्रति इत्यादीनां न। स्मारयति घ्रापयति देवदत्तेन।**

The root दृशि has to be included in the rule. Thus दर्शयति &c. 'To know' (बुद्ध्यर्थ) in the rule refers to knowledge in general, and does not include special kinds of knowledge. This follows because special provision is made here for दृशि which means the particular kind of knowledge gained through the sense of sight. Hence स्मृ, घ्रा &c. will have no प्रयोज्यकर्म। Thus स्मारयति &c.

मित—। पश्यन्ति हरिं भक्ताः इत्यणौ। णौ तु दर्शयति हरिं भक्तान्। ननु दृशिर्बुद्ध्यर्थश्चक्षुर्जनितबोधे वर्त्तते। तत् सूत्रेणैवात्र सिध्यति किमनेन वार्त्तिकेन? न सिध्यति। सूत्रे बुद्धिरिति ज्ञानमात्रम्, न चक्षुरादिभिः कृतं विशिष्टज्ञानम्। एवं पश्यति स्मरति प्रभृतीनामप्राप्तौ पश्यतेर्विधीयते दृशेश्चेति। इतरेषां स्मरत्यादीनामविधिरेव।

**दी—। "शब्दायतेर्न" (वार्त्तिक)। शब्दाययति देवदत्तेन। धात्वर्थसंगृहीतकर्मत्वेन अकर्मकत्वात् प्राप्तिः।**

कर्मसंज्ञा will not arise in the case of the root शब्दाय। Thus शब्दाययति &c. Here the कर्म is included in the sense of the root शब्दाय ; the root has thus become अकर्मक, and the rule applies. In other words, शब्दायते means 'to make noise'. This is intransitive because 'noise'—the कर्म—is included in the sense of

the root. Hence the Varttika prohibits the कर्मसंज्ञा expected from 'अकर्मकाणाम्' in the rule.

मित—। शब्दं करोति इति "शब्दवैर—" (२६७३—३।१।१७) इति क्यङ्। शब्दाय इति नामधातुः। तस्य अणिकर्त्तुः कर्मसंज्ञा प्रतिषिध्यते। कथं प्राप्तिरिति चेत्तत्राह—'धातोः' यः 'अर्थः' शब्दकरणरूपः तेन 'संगृहीतं' शब्द इति 'कर्म' येन यस्य वा तस्य भावः तत्त्वम्। तेन हेतुना अकर्मकोऽयं शब्दायधातुः, धात्वर्थव्यतिरिक्तमपरं कर्म अस्य नास्ति। तत् 'अकर्मकाणाम्' इति प्राप्ता संज्ञा। उक्तञ्च— "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षायाः कर्मणोऽकर्मिका क्रिया॥" इति।

**दी—। येषां देशकालादिभिन्नं कर्म न सम्भवति ते अत्र अकर्मकाः, न तु अविवक्षितकर्माणोऽपि। तेन 'मासमासयति देवदत्तम्' इत्यादौ कर्मत्वं भवति 'देवदत्तेन पाचयति' इत्यादौ तु न।**

By अकर्मक in the rule, here, are to be understood those only that have no कर्म except देश, काल &c. but not those whose कर्म is merely ignored. Thus in मासमास्ते देवदत्तः the कर्म is a काल। Hence the root is अकर्मक and we get मासमासयति देवदत्तम्। But in देवदत्तः पचति the कर्म is ओदन ( though suppressed ) which is neither देश nor काल &c. ; the root is not अकर्मक, and, not being included in the गत्यादि list, we have देवदत्तेन &c.

मित—। अथ देशकालादिभिः सर्वे एव सकर्मका धातवः, तत् किमिदम् 'अकर्मकाणाम्' इति ? तत्राह—येषां देशकालादिव्यतिरिक्तं कर्म नास्ति ते एव इह अकर्मकाः, नान्ये। फलं तु—मासमास्ते देवदत्तः इत्यत्र मासेन सकर्मिका अपि आसनक्रिया अकर्मिका गृह्यते, णौ च देवदत्तस्य कर्मता भवति। देवदत्तः पचति इत्यत्र पुनः अविवक्षितेऽपि ओदनरूपे कर्मणि सकर्मक एव धातुः, णौ च देवदत्तस्य कर्मता नास्ति।

५४१। हृक्रोरन्यतरस्याम् ॥१।४।५३॥

दी—। हृक्रोः अणौ यः कर्त्ता स णौ वा कर्मसंज्ञः स्यात्। हारयति कारयति वा भृत्यं भृत्येन वा कटम्।

Of हृ and कृ, the कर्त्ता in the non-causal stage optionally becomes a कर्म when णिच् is attached. Thus हारयति &c. हृ 'to carry' implies motion—it is गत्यर्थ ; hence हारयति भृत्यं कटम्—makes the servant carry the mat—is the only form expected ; this rule provides for भृत्येन also. कृ 'to make' is not in the list, hence admits of the form कारयति भृत्येन कटम् only ; this rule allows भृत्यम् also.

मित—। 'हृ' 'कृ' इत्येतयोर्द्वन्द्वे हा च का च हृकरौ। तयोः 'हृक्रोः'। करोतेरप्राप्ते हरतेर्गत्यर्थत्वात् नित्ये प्राप्ते विकल्पार्थं वचनम्।

दी—। "अभिवादिदृशोरात्मनेपदे वा इति वाच्यम्" (वार्त्तिक)। अभिवादयते दर्शयते देवं भक्तं भक्तेन वा।

अभिवादि and दृश will optionally have a प्रयोज्यकर्म if णिच् is attached in the आत्मनेपद। Thus अभिवादयते &c. In the परस्मैपद the forms will be अभिवादयति देवं भक्तेन and दर्शयति देवं भक्तम् only—no option.

मित—। अत्र भाष्ये 'अभिवादि' इति वार्त्तिके पाठः, उदाहरणे तु 'अभिवदि' इति। तत्रेदं मन्तव्यम्—गुरूणां वन्दने "अमुकोऽहं नमामि" इति गुरुमभिलक्ष्य कथनमाचारः। ततश्च 'अभि' अभिलक्ष्य 'वदनं' कथनमिति व्युत्पत्त्या अभिवदनं नमस्कारः। सकर्मकोऽयं धातुस्तथा च भाष्ये प्रयोगः "अभिवदति गुरुं देवदत्तः" इति। किञ्च वन्दितो गुरुः शिष्यमभिलक्ष्य वदति "एह्येहि वत्स आयुष्मान् भव" इत्यप्याचारः। इदन्तु गुरुकर्त्तृकमभिवदनमाशीर्वचनोच्चारणे वर्त्तते। तेन धात्वर्थसंगृहीतकर्मत्वादकर्मक इह धातुः। एवं शिष्यकर्त्तृकमभिवदनं सकर्मकम्, गुरुकर्त्तृकं

पुनरकर्मकमिति स्थितम् ॥ तथाच—अभिवदिपाठे, अभिवदति देवं भक्त इत्यणिचि, नमस्करोतीत्यर्थः। तत्र भक्त्या प्रेरितो भक्त इति विवक्षायां हेतुमण्णिचि, अभिवादयते देवं भक्तं भक्तेन वा। "णिचश्च" (२५६४—१।३।७४) इति कर्त्रभिप्राये क्रियाफले आत्मनेपदम्। नमस्कारार्थानां सूत्रे अग्रहणात् अप्राप्ते विकल्पः॥ अभिवादिपाठे तु, अभिवदति देवः, आशीर्वचनमुच्चारयति। तत्रासौ भक्तेन कृतनमस्कारेण प्रेरित इति हेतुमण्णिचि, अभिवादयते देवं भक्तः। "णिचश्च" इत्यात्मनेपदम्। अकर्मकत्वा-दणिकर्तुर्देवस्य कर्मत्वम्। इह अभिवादनमिति णिचा नमस्कारे पर्यवसानम्। भक्तिकर्तृका चात्र भक्तस्य प्रेरणा इति विवक्षायां, पुनर्णौ, अभिवादयते इत्यादि प्राग्वत्। अस्मिन् पक्षे सूत्रे अग्रहणात् हेतुमण्णिच्करणाच्च अप्राप्ते वचनम् ॥ एवं पश्यति देवं भक्तः। तं भक्तिः प्रेरयति—दर्शयते देवं भक्तं भक्तेन वा। "णिचश्च" (२५६४—१।३।७४) इत्यात्मनेपदम्। "दृशेश्च" (५४०, वा) इति नित्ये प्राप्ते विकल्पः॥ 'आत्मनेपदे' किम्? अभिवादयति देवं भक्तेन इत्यप्राप्तिरेव, दर्शयति देवं भक्तम् इति च नित्या प्राप्तिः॥

## ५४२। अधिशीङ्स्थासां कर्म॥ १।४।४६॥

**दी—। अधिपूर्वाणामेषामाधारः कर्म स्यात्। अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः।**

The roots शी, स्था and आस preceded by अधि will have their आधार for कर्म। Thus अधिशेते &c. The word आधारः follows from "आधारोऽधिकरणम्" (632—1. 4. 45 ).

मित—। आधार इत्यनुवृत्तिलभ्यम्। एते प्रकृत्या अकर्मका धातवः आधारेण सकर्मका जाताः।

## ५४३। अभिनिविशश्च॥ १।४।४७॥

**दी—। 'अभिनि' इत्येतत् सङ्घातपूर्वस्य विशतेराधारः कर्म स्यात्। अभिनिविशते सन्मार्गम्।**

The root विश with the conjunct prefix अभिनि will have its आधार for कर्म। Thus अभिनिविशते &c. Adopts an honest policy, follows the path of virtue, &c.

मित—। कर्म इत्यनुवर्त्तते आधारस्तु अनुवृत्त एव। "नेर्विशः" (२६८३—१।३।१७) इत्यात्मनेपदम्। अभिनिविश इति आग्रहे वर्त्तते। प्रकृत्यायमकर्मकः।

**दी—। "परिक्रयणे सम्प्रदानम्—" (५८०—१।४।४४) इतिसूत्रादिह मण्डूकप्लुत्या अन्यतरस्यांग्रहणमनुवर्त्त्य व्यवस्थितविभाषाश्रयणात् क्वचिन्न। पापेऽभिनिवेशः।**

Sometimes the आधार does not become कर्म, but appears as आधार। Witness पापेऽभिनिवेशः। This is because the word अन्यतरस्याम्, implying optionality, comes in here like a frog by a leap from the rule "परिक्रयणे—" and the optionality is restricted. The words विभाषा and अन्यतरस्याम् imply optionality. विभिन्ना भाषा विभाषा different language, which implies optionality. Again अन्यतरस्याम् is elliptical for अन्यतरस्यां कक्षायाम्—in the other alternative. Or treat them as indeclinables. A very simple way of reconciling the examples अभिनिविशते &c. and पापे &c. is to suppose that so long as अभिनिविश् stands unchanged, the आधार appears as कर्म; otherwise as अधिकरण। In अभिनिवेश there is change, viz, विश has become वेश by गुण, hence पापे appears as अधिकरण।

मित—। अन्यतरस्यामिति विभाषेति च अव्ययेषु पठ्येते। विकल्पद्योतकावेतौ। यद्वा—विभिन्ना भाषा विभाषा। अनव्ययञ्चैतत्। तथा च वृत्तौ प्रयोगः—"ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया" इति। अन्यतरस्यामित्यत्र च कक्षायामिति विशेष्यमध्याहार्य्यम्। यद्वा अन्यतरस्य आम् इति च्छेदः। आमित्यङ्गीकारे। तेन

विकल्पबोध: ॥ 'क्वचित्' आधारस्य कर्मत्वं 'न'—पापेऽभिनिवेश:। कथमेतत् ? "परिक्रयणे सम्प्रदानम्—" 'इति सूत्रादिह' अस्मिन् सूत्रे विकल्पबोधकस्य 'अन्यतरस्याम्' इति शब्दस्य 'ग्रहणम् अनुवर्त्त्य' विकल्प: अनुवर्त्तते इति परिकल्प्य एतत् लभ्यते ॥ यदि विकल्प:, तर्हि 'पापमभिनिवेश:' इत्यप्यस्तु, अस्तु च 'अभिनिविशते सन्मार्गे' इत्यपि। नैवम्—'व्यवस्थितायाः' निर्दिष्टविषयाया 'विभाषायाः' विकल्पस्य 'आश्रयणात्' ग्रहणात्, इह आधार: इह कर्म, एवं विषयविभागकल्पनात् अनिष्टं परिक्रियते। ननु तदा "परिक्रयणे—" इति "अभिनि—" इति च एतयोर्मध्ये पतितेषु "आधारोऽधिकरणम्" (६३२—१।४।४५) इत्यादिषु सूत्रेष्वपि व्यवस्थितविभाषा प्रसज्यते। तदाह—'मण्डूकप्लुत्या अनुवर्त्त्य' इति। यथा मण्डूक: स्थानात् दूरं स्थानान्तरमुत्प्लुत्य गच्छति, अन्तरा भूमिं न स्पृशति, तथा अयमपि अन्यतरस्यांशब्द: सूत्रात् सूत्रान्तरम् अन्तरा सूत्राणि अस्पृशन्नेव व्रजति। यद्वा—अविकृते अभिनिविश इति सङ्घाते कर्म, विकृतेऽधिकरणम्। अभिनिविशते सन्मार्गम् इत्यविकृत: सङ्घात:, अत: कर्मत्वम्। पापेऽभिनिवेश: इति तु घञा गुणेन विकृत: सङ्घात:, ततोऽधिकरणम्।

## ५४४। उपान्वध्याङ्वस: ॥ १।४।४८ ॥

**दी—। उपादिपूर्वस्य वसतेराधारः कर्म स्यात्। उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः।**

The आधार of वस with उप &c prefixed becomes its कर्म। Thus उपवसति &c.

**मित—।** उपान्वध्याङ् इति द्वन्द्व:। तत उपान्वध्याङ्पूर्वो व: (वस्) इति शाकपार्थिवादि:। यद्वा उपान्वध्याङ्भ्यो व: (वस्) इति सुप्सुपा। वस् इति वस निवासे भ्वादि:।

**दी—। "अभुक्त्यर्थस्य न" (वार्त्तिक)। वने उपवसति।**

The आधार will not be the कर्म if वस means 'to fast'. Thus वने &c.

**मित—।** उपपूर्वस्यैव अयमर्थ: सम्भवति।

दी—। "उभसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥" (वार्त्तिक)॥
उभयतः कृष्णं गोपाः। सर्वतः कृष्णम्। धिक् कृष्णाभक्तम्। उपर्य्युपरि लोकं हरिः। अध्यधि लोकम्। अधोऽधो लोकम्॥

द्वितीया should be attached to a प्रतिपदिक if it is connected with उभ and सर्व followed by तस्, with धिक्, with उपरि, अधि and अधः doubled, and sometimes in connection with other particles also. Thus उभयतः &c. Here उभसर्वतसोः and धिक् are सप्तम्यन्त। धिक् implies निन्दा censure. उभयतः, सर्वतः, धिक्, उपरि, अधि, अधस् are all अव्यय। Hence अन्यत्र has to be taken as referring to other indeclinables. दृश्यते implies that un-named cases are to be ascertained from *usage*.

मित—। उभसर्वयोः तसौ उभसर्वतसौ, तस्प्रत्ययान्तौ उभसर्वशब्दौ इत्यर्थः। तयोः युक्तयोः सतोः। धिङ् निन्दायामव्ययम्, तस्मिन् सति। आम्रेड़ितं द्विरुक्तस्य पराईम्। तत् अन्ते येषां तेषु, द्विरुक्तेषु सत्सु इत्यर्थः॥ उभसर्वतसोः, धिक्शब्दे, आम्रेड़ितान्तेषु उपर्य्यादिषु त्रिषु उपर्य्यध्यधस्सु द्विरुक्तेषु, एभिर्योगे इत्यर्थः, द्वितीया स्यात्। प्रदर्शनमात्रमेतत् न परिगणनम्। तदाह—'ततः अन्यत्रापि' द्वितीया दृश्यते॥ उक्ता कर्मद्वितीया, इह तु उपपदद्वितीया प्रारभ्यते। द्वितीयेयं शेषषष्ठ्या अपवादः॥ उपर्य्यादयः "उपर्य्यध्यधसः सामीप्ये" (२१४२—८।१।७) इत्युक्ता उपरि, अधि, अधस् एते त्रयः। लोकस्य उपरिष्टात् समीपे देशे, लोकमधिकृत्य समीपे एव, लोकस्य अधस्तादपि समीपे खलु हरिरस्ति लोकस्तु मूढ़तया तं न पश्यति, इति उदाहरणत्रयस्य मिलितोऽर्थः। "उपर्य्यधि—" इतिसूत्रेण कृते द्वित्वे एव द्वितीया। अन्यत्र "उपर्य्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः"। वीप्सायां द्विर्वचनम्, यथाप्राप्ता च षष्ठी॥ 'ततः अन्यत्र' इति अन्येषु अव्ययेषु इत्यर्थः, अव्ययानामेव प्रकृतत्वात्॥

दी—। "अभितः परितः समया निकषा हा प्रतियोगेऽपि" (वार्त्तिक)।

अभितः कृष्णम्। परितः कृष्णम्। ग्रामं समया। निकषा लङ्काम्। हा कृष्णाभक्तम्। तस्य शोच्यता इत्यर्थः। "बुभुक्षितं न प्रति भाति किञ्चित्"।

Also in connection with अभितः, परितः, समया, निकषा, हा and प्रति। Thus अभितः &c. हा कृष्णाभक्तम् means pitiable is the plight of one not devoted to Krishna. In these and other Upapada Vibhaktis षष्ठी was generally expected and is barred by these special injunctions. Thus अभितः कृष्णम् is समीपे कृष्णस्य &c. प्रति भाति are two separate words, the first being connected with बुभुक्षितम्। The line means—It is all blank to the hungry.

मित—। "ततोऽन्यत्रापि दृश्यते" इत्युक्तानां प्रयोगलभ्यानां कानिचित् प्रदर्श्यन्ते अभित इति। अभितः उभयतः। परितः सर्वतः। समया समीपे, अधिकरणशक्तिप्रधानम्। एवं निकषा। हा इत्यव्ययं शोके। बुभुक्षितं प्रति न किञ्चिद्भाति॥ एवमन्यत्रापि प्रयोगोऽनुसर्त्तव्यः। तथा च ऋतेर्योगे द्वितीया लभ्यते "पुरुषाराधनमृते" इत्यादि प्रयोगदर्शनात्। केचित् पृथग्विनानानाभि र्द्वितीयामपि अनेनैव साधयन्ति॥

## ५४५। अन्तरान्तरेणयुक्ते॥ २।३।४॥

दी—। आभ्यां योगे द्वितीया स्यात्। अन्तरा त्वां मां हरिः। अन्तरेण हरिं न सुखम्॥

द्वितीया should be attached in connection with अन्तरा and अन्तरेण। Thus अन्तरा &c.—Between you and me the interval is not blank, but Hari exists &c.

मित—। अन्तरा इत्यधिकरणशक्तिप्रधानमव्ययं मध्ये इत्यर्थे। अन्तरेण इति विनार्थेऽव्ययम्। अन्तरा च अन्तरेण च इति द्वन्द्वः। ताभ्यां यत् युक्तं, तस्मिन् द्वितीया स्यात्। मध्यता तु वस्तुद्वयसापेक्षा। तेन "त्वां माम्" इत्युभयत्र द्वितीया।

५४६। कर्मप्रवचनीयाः ॥ १।४।८३ ॥

दी—। इत्यधिकृत्य—

Having taken up this subject —A number of indeclinables follow covering rules 547—557; these are all to be termed कर्मप्रवचनीय।

मित—। कर्म इति क्रियावचनम्। तत् प्रोक्तवन्तः क्रियां काञ्चित् द्योतितवन्तः इति भूते कर्त्तरि अनीयर् बाहुलकात्। ये पूर्वं क्रियां काञ्चित् द्योतितवन्तः सम्प्रति तस्याः क्रियाया अभावात् न क्रियां कामपि द्योतयन्ति, किन्तु क्रियान्तरेण कस्यापि सम्बन्धमात्रं द्योतयन्ति, तेऽत्र कर्मप्रवचनीयाः।

५४७। अनुर्लक्षणे ॥ १।४।८४ ॥

दी—। लक्षणे द्योत्ये अनुरुक्तसंज्ञः स्यात्। गत्युपसर्गसंज्ञापवादः।

अनु has this designation when it implies causation. This sets aside the designations गति and उपसर्ग।

मित—। लक्ष्यते अनेनेति लक्षणं सूचकम्, कार्य्यकारणभावस्य इति शेषः। एतच्च उपरिष्टात् स्फुटीभविष्यति॥

५४८। कर्मप्रवचनीययुक्ते द्वितीया ॥ २।३।८ ॥

दी—। एतेन योगे द्वितीया स्यात्। जपमनु प्रावर्षत्। हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः।

द्वितीया is the विभक्ति in connection with a कर्मप्रवचनीय। Thus जपम् &c. The sense is that the shower was indicated by जप which was its cause. जपमनु प्रावर्षत् is elliptical for जपमनुनिशम्य प्रावर्षत् where अनु is an उपसर्ग to निशमनक्रिया। It specifies the sense of this क्रिया saying that वर्षण followed निशमन। Indirectly it also declared that जप is the cause and वर्षण its effect.

When निश्रमनक्रिया is dropped, the causal relation alone remains. अनु then indicates that relation only. "It does not now specify निश्रमनक्रिया, nor does it drag in that क्रिया though absent; it does not expressly declare any relation, but merely *indicates* the relation"—*Hari-Karika.*

मित—। 'कर्मप्रवचनीयेन' यो 'युक्तः' तस्मिन् 'द्वितीया' विभक्तिः स्यादित्यर्थः। अथ कोऽत्र कर्मप्रवचनीयेन युक्तः? यो हि प्राक् कर्मरूपेण क्रियया युक्त आसीत् स एव। सम्प्रति लुप्तायां क्रियायामुपसर्गस्य कर्मप्रवचनीयत्वे जातेऽपि पूर्वयोगानुरोधात् तस्यैव युक्तता न्याय्या॥ अत्र उदाहरणे यां प्रति अनुरुपसर्ग आसीत्, लुप्ता सा क्रिया। जपमनुनिशम्य प्रावर्षत् इति तु लोपात् प्राक्। तत्र अनुः निश्रमनक्रियां द्योतितवान्, वर्षणपूर्ववर्त्ति निश्रमनमित्येवं प्रकारेण क्रियां विशेषितवान्। तथा च जपः कारणं, वर्षणं कार्य्यमित्यपि बोधितवान्। लुप्तायां क्रियायां सम्प्रति अनुः तां क्रियां न द्योतयति, केवलं जपवर्षणयोः कार्य्यकारणरूपयोः ज्ञाप्यज्ञापकभावं साक्षादनुक्त्वापि बोधयति। एवं सर्वत्र कर्मप्रवचनीयेषु द्रष्टव्यम्। तदाह—'हेतुभूतेन' वर्षणकारणेन 'जपेन उपलक्षितं' सूचितं 'वर्षणम्' इति। उक्तञ्च हरिणा—"क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः। नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः॥"इति॥

**दी—। परापि हेतौ तृतीया अनेन बाध्यते "लक्षणेत्थम्भूत—" (५५२—१।४।९०) इत्यादिना सिद्धे पुनः संज्ञाविधानसामर्थ्यात्।**

The तृतीया by "हेतौ" (568—2. 3. 23), though subsequent, is barred by this rule, because the संज्ञा is enjoined again though attached already by "लक्षणेत्थम्भूत—"। That is to say अनु in the matter of लक्षण is already a कर्मप्रवचनीय by "लक्षणेत्थम्भूत—"। The designation is here enjoined a second time because the द्वितीया required by "लक्षणेत्थम्भूत—" is barred by

हेतुतृतीया, the rule "हेतौ" being later than the rule "कर्मप्रवचनीययुक्ते द्वितीया" in Panini's arrangement.

मित—। ननु हेतुश्चेत् जपः "हेतौ" (५६८—२।३।२३) इति परवर्त्तिनी तृतीया बाधिका भविष्यति द्वितीयायाः। सत्यं भविष्यति "लक्षणेत्थम्भूत—" इत्यवस्थायाः सामान्यतः प्राप्ताया द्वितीयायाः। तत् अनोर्बाधो मा भूत् इत्येव हि सूत्रकारः "प्रति-पर्य्यनवः" इति समुदायात् अनुं निष्कृष्य विहितामपि संज्ञां भूयो विदधाति "अनु-र्लक्षणे" इति। तेन एतद्विषये कर्मप्रवचनीयद्वितीया एव हेतुतृतीयां बाधिष्यते॥

## ५४९। तृतीयार्थे॥ १।४।८५॥

दी—। अस्मिन् द्योत्ये अनुरुक्तसंज्ञः स्यात्। नदीमन्ववसिता सेना। नद्या सह संबद्धा इत्यर्थः। षिञ् बन्धने—क्तः।

अनु has this designation if it implies the sense of the तृतीया विभक्ति। Thus नदीम् &c. The sense is 'joined with the river.' The क्त is after षिञ् to bind.

मित—। अनुः तृतीयार्थे द्योत्ये कर्मप्रवचनीयः स्यात् इत्यन्वयः। तृतीयार्थ इह सहार्थः। सहार्थतृतीयाया बाधिकेयं द्वितीया।

## ५५०। हीने॥ १।४।८६॥

दी—। हीने द्योत्ये अनुः प्राग्वत्। अनु हरिं सुराः। हरेर्हीना इत्यर्थः।

अनु is as before ( a कर्मप्रवचनीय ) when the inferior has to be indicated by it. Thus अनु &c. The sense is, the gods are inferior to हरि। Hari and सुराः both are connected with अनु, yet हरि alone, the superior, takes द्वितीया। That is th usage in expressing this sense.

मित—। अत्र उत्कृष्टे विभक्तिः, न हीने नाप्युभयोः, अभिधानस्वभावात्।

५५१। उपोऽधिके च ॥ १।४।८७ ॥

दी—। अधिके हीने च द्योत्ये उप इत्यव्ययं प्राक्संज्ञं स्यात्। अधिके सप्तमी वक्ष्यते ( ६४५—२।३।९ )। हीने—उप हरिं सुराः।

उप is a कर्मप्रवचनीय when the inferior or the superior has to be indicated. सप्तमी will be subsequentty enjoined, barring द्वितीया, in indicating the superior. For the inferior, उप &c. is an example.

मित—। चकारात् हीनेऽपि। अधिके परा सप्तमी द्वितीयाया बाधिका।

५५२। लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्य्यनवः ॥ १।४।९० ॥

दी—। एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः। लक्षणे—वृक्षं प्रति परि अनु वा विद्योतते विद्युत्। इत्थम्भूताख्याने—भक्तो विष्णुं प्रति परि अनु वा। भागे—लक्ष्मीर्हरिं प्रति परि अनु वा, हरेर्भाग इत्यर्थः। वीप्सायाम्—वृक्षं वृक्षं प्रति परि अनु वा सिञ्चति। अत्र उपसर्गत्वाभावान्न षत्वम्॥ एषु किम्? परिषिञ्चति॥

प्रति &c. are कर्मप्रवचनीय when लक्षण, इत्थम्भूताख्यान, भाग, वीप्सा are the subject-matter. Thus लक्षणे (in the case of an indicator)—वृक्षं &c. इत्थम्भूताख्याने (in the declaration of one's change of character)—भक्तो &c. भागे ( in the case of a share ) लक्ष्मीः &c ; the sense is, she is Hari's share. वीप्सायाम् (in the case of pervasion)—वृक्षं &c ; here no ष because प्रति &c. are not उपसर्ग। Why say 'when these senses &c'? Witness परिषिञ्चति ( with a ष ) because परि &c are now उपसर्ग।

मित—। लक्षणं सूचकम्। तस्मिन् विषये॥ इत्थं भूतः इत्थम्भूतः कश्चित्

प्रकारं प्राप्तः। सुप्सुपा। तस्य आख्यानं कथनम्। इत्थम्भूतः आख्यायते अनेन इत्थम्भूताख्यानं प्रकारविशेषनिरूपकम् इति तु नागेशः। तस्मिन् विषये॥ भागः स्वीक्रियमाणः अंशः। नागेशस्तु भागः अस्ति अस्य भागः, अंशहरः। अर्शआद्यच्। तस्मिन् विषये॥ व्याप्तुमिच्छा वीप्सा। तस्या विषये॥ वृक्षं प्रतिगम्य परिधाव्य अनुधाव्य वा विद्योतते विद्युत् इति वृक्षेण विद्युद्विद्योतनदेशो लक्ष्यते। तत् वृक्षोऽत्र लक्षणम्। तच्च प्रत्यादिना सूच्यते। भूतपूर्वे कर्मणि द्वितीया॥ भक्तः अनुरक्तः। कर्त्तरि क्त आदिकर्मणि। अनुरक्तता एवात्र इत्थम्भूतता। सा प्रत्यादिना सूच्यते। विष्णुं प्रतिपूज्य परिपूज्य अनुपूज्य वा भक्तः इति भूतपूर्वे कर्मणि द्वितीया॥ लक्ष्मीविषये हरिर्भगवान्। सागरमन्थने लक्ष्मीर्हरेरंशः। तच्च प्रत्यादिना सूच्यते। हरिं प्रतिसंश्रिता परिसंश्रिता अनुसंश्रिता वा लक्ष्मीः इति भूतपूर्वे कर्मणि द्वितीया॥ वृक्षं वृक्षमिति द्विरुक्तेनैव वीप्सा सूच्यते न प्रत्यादिना। तत् वीप्सां प्रति प्रत्यादीनां न द्योतकता। वीप्सानुरोधादेव "एष्वर्थेषु विषयभूतेषु" इत्युक्तं न पुनरेष्वर्थेषु द्योत्येषु॥ वीप्साभावे कर्मप्रवचनीयत्वाभावात् उपसर्गता भवति, तेन वृक्षं परिषिञ्चति इति षत्वम्॥

## ५५३। अभिरभागे॥ १।४।९१॥

**दी—। भागवर्जे लक्षणादौ अभिरुक्तसंज्ञः स्यात्। हरिमभि वर्त्तते। भक्तो हरिमभि। देवं देवमभि सिञ्चति। अभागे किम्? यदत्र ममाभिष्यात् तद्दीयताम्।**

अभि is a कर्मप्रवचनीय in the matter of लक्षण &c. as above, excepting भाग। Thus हरिमभि &c. Why say अभागे? Witness यदत्र &c.—Give me my share of it—where अभिष्यात् has ष, because, the reference being to भाग—share or sharer—अभि is not a कर्मप्रवचनीय, but an उपसर्ग and cause's षत्व।

मित—। यत् मम अभिष्यात् यो मम भाग इत्यर्थः। कर्मप्रवचनीयसंज्ञाभावे द्वितीया न भवति। शेषलक्षणा षष्ठी तु प्राप्ता एव। तदाह ममाभिष्यात्, न पुनर्मा-

सभिष्यात्। अभेरुपसर्गत्वे "उपसर्गप्रादुर्भ्याम्—" (२४८२—८।३।८७) इति षत्वम्।

## ५५४। अधिपरी अनर्थकौ ॥ १।४।९३ ॥

दी—। उक्तसंज्ञौ स्तः। कुतोऽधि आगच्छति। कुतः परि आगच्छति। गतिसंज्ञाबाधात् "गतिर्गतौ" (३९७७—८।१।७०) इति निघातो न।

अधि and परि are कर्मप्रवचनीय when they carry no special sense. Thus कुत: &c. Here अधि and परि are not affected by निघात ( low accent ) as required by the rule "गतिर्गतौ" because the designation गति is, in the matter of them, supplanted by the designation कर्मप्रवचनीय।

मित—। उदाहरणयो: क्रिया कापि न लुप्ता यां प्रति अधिपरी उपसर्गौ स्याताम्। अत एतौ इह सम्बन्धविशेषं कमपि न द्योतयतः। किन्तु गमनक्रियार्थमात्रं विशेषयत:। तदनयोर्गतिसंज्ञा प्राप्ता अनेन निवार्य्यते। निघात इत्यनुदात्तम्। आगच्छति इत्यत्र आ इति गतिः। ततः पूर्ववर्त्तिनोः 'अधि परि' इत्येतयोः "गतिर्गतौ" इत्यनेन अनुदात्तता प्रसज्यते, एतयोर्गतिसंज्ञाबाधात् तु न भवति ॥

## ५५५। सुः पूजायाम् ॥ १।४।९४ ॥

दी—। सु सिक्तम्। सु स्तुतम्। अनुपसर्गत्वान्न षः। पूजायां किम्? सुषिक्तं किं तवात्र? क्षेपोऽयम्।

सु is a कर्मप्रवचनीय when praise is implied. Thus सु सिक्तम् &c. No ष because सु is not an उपसर्ग। Why say पूजायाम्? Witness सुषिक्तं &c.—Is this your fine sprinkling here? This is a taunt—a censure; hence सु is an उपसर्ग and we get ष।

मित—। सुषिक्तमिति भावे क्तः। क्षेप इति निन्दा। अयथाकृतं सेकं वीक्ष्य सोपहासं कश्चिदाह—अयि भोः "सुषिक्तं किं तवात्र" इति ॥

५५६। अतिरतिक्रमणे च ॥ १।४।९५ ॥

दी—। अतिक्रमणे पूजायाञ्च अतिः कर्मप्रवचनीयसंज्ञः स्यात्। अति देवान् कृष्णः।

अति is a कर्मप्रवचनीय when it implies 'surpassing' or 'praise'.

मित—। पूजा प्रशंसा। अतिक्रम्य देवान् कृष्णः इति कृष्णस्य प्रशंसा वा अतिक्रमणमात्रं वा गम्यते। उभयत्र कर्मप्रवचनीयता। उभयोरेकमेव उदाहरणम्।

५५७। अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु ॥१।४।९६॥

दी—। एषु द्योत्येषु अपिरुक्तसंज्ञः स्यात्।

अपि is a कर्मप्रवचनीय when it implies :—( i ) पदार्थ—The sense of some word which is not directly mentioned ; ( *ii* ) सम्भावन—a hyperbole ; ( *iii* ) अन्ववसर्ग—permission to do as desired ; ( *iv* ) गर्हा—censure ; ( *v* ) समुच्चय—conjunction of several statements.

मित—। पदस्य अप्रयुक्तस्य पदस्य कस्यचित् अर्थः पदार्थः। तस्यैवोदाहरति—

दी—। सार्पिषोऽपि स्यात्। अनुपसर्गत्वात् न षः। सम्भावनायां लिङ्।

Thus सर्पिषः &c.—A drop of *Ghi* might perhaps exist. अपि not being an उपसर्ग, no ष। The लिङ् in स्यात् implies certainty of existence.

मित—। 'सर्पिषः—' इति पदार्थद्योतनस्य उदाहरणम्। सम्भावना सत्ताध्यवसानम् अस्तित्वानुमानमित्यर्थः। तच्चानुमानं कार्य्यकारणज्ञानसापेक्षम्। कृष्णमेघश्चेत् स्यात् वृष्टिर्भवेत् इत्यत्र "हेतुहेतुमतोर्लिङ्" ( २८१३—३।३।१५६ ) इति लिङ्। अथ कश्चित् कार्य्यकारणवित् कृष्णमेघोदयं दृष्ट्वा कारणमनुक्त्वा एव यदि वदेत्

"वृष्टिर्भवेत्" इति, तदोच्यते सम्भावनायां लिङ् इति। वस्तुतस्तु तत्रापि हेतुमत्ता एव लिङो निमित्तम्॥ भवतु, काऽत्र पदार्थद्योतकता अपेः इत्याह—

**दी। तस्या एव विषयभूते भवने कर्त्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन् अपिशब्दः स्यादित्यनेन सम्बध्यते। 'सर्पिषः' इति षष्ठी तु अपिशब्दबलेन गम्यमानस्य बिन्दोरवयवावयविभावसम्बन्धे। इयमेव हि अपिशब्दस्य पदार्थद्योतकता नाम। द्वितीया तु नेह प्रवर्त्तते, सर्पिषो बिन्दुना योगो न तु अपिना इत्युक्तत्वात्।**

The subject-matter of this सम्भावना is the भवनक्रिया in स्यात्। अपि goes with स्यात् and implies uncertainty of the भवनक्रिया, the agent of this क्रिया having made itself scarce. With such reference to the agent through अपि, it is seen that some such thing as बिन्दु ( a drop ) is here understood as the agent of भवनक्रिया। सर्पिषः takes षष्ठी because it is the अवयविन्, 'the अवयव being बिन्दु। This is what is meant by अपि implying the sense of some suppressed word. There is no scope for द्वितीया here, because, as remarked, सर्पिस् is connected with बिन्दु not with अपि।

मित—। 'भवनम्' असधातोरर्थः, तदेवेह 'सम्भावनाया विषयः'। सम्भावनायां लिङि, स्यादिति धात्वर्थस्य भवनक्रियाया अवश्यम्भावं वक्ति। अपिः शङ्कायाम्। "गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपिः" इत्यमरः। शङ्का सन्देहः। अपिस्यादिति भवनक्रियायां सन्देहं योजयति, 'दुर्लभा भवनक्रिया' इति कथयति। एषोऽत्र वाच्योऽर्थः। 'कर्त्तात्र दुर्लभः' इत्येवेयं दुर्लभता क्रियायाः। ततश्च सर्पिषः स्वल्पता द्योतिता। एवमिह 'अपिशब्दबलेन' अल्पत्वबोधकः 'बिन्दुः' लेशः इत्येवम्प्रकारकः कश्चित् शब्दः अप्रयुक्तोऽस्ति इति गम्यते। तस्यैवार्थः अपिना द्योत्यते इति 'पदार्थद्योतकता अपिशब्दस्य'। इत्थं कर्मप्रवचनीयत्वे 'अपि स्यात्' इति षत्वाभावः।

उदाहरणान्तराण्याह—

दी—। अपि स्तुयाद्विष्णुम् (सम्भावनम्—शक्तुयत्कर्षमाविष्कर्त्तु-मत्युक्तिः)॥ अपि स्तुहि (अन्ववसर्गः—कामचारानुज्ञा)॥ धिग्देवदत्तम्, अपि स्तुयाद्वृषलम् (गर्हा)॥ अपि सिञ्च अपि स्तुहि (समुच्चये)॥

सम्भावन is a hyperbole to imply plenitude of power. Thus अपि स्तुयाद्विष्णुम्—He can enumerate all the excellences of Lord Vishnu even. अन्ववसर्गे—अपि स्तुहि belaud him by all means. Instance of censure—धिक् &c. Fie on Devadatta he would flatter even a Sudra. समुच्चये—अपि &c—sprinkle and praise too.

मित—। सम्भावनमसम्भाव्यार्थसम्भावनम्। अवाङ्मनसगोचरं विष्णुमपि स्तुयात्। सम्भावनायां लिङ्॥ धिग्देवदत्तम् इत्यत्रापि सम्भावनायामेव लिङ्। तत्र च विषये "गर्हायां लडपिजात्वोः" (२७९९—३।३।१४२) इति लट् परेण "हेतुहेतु-मतोर्लिङ्" (२८१३—३।३।१५६) इत्यनेन बाध्यते। सम्भावना च तन्मूलिकैव इत्युक्तं प्राक्। अपिष्टुयात् अपिष्टुहि अपिषिञ्च इत्यादि तु न, उपसर्गत्वाभावात्।

## ५५८। कालाध्वनोरत्यन्तसंयोगे॥ २।३।५॥

दी—। इह द्वितीया स्यात्। मासं कल्याणी। मासमधीते। मासं गुडधानाः॥ क्रोशं कुटिला नदी। क्रोशमधीते। क्रोशं गिरिः॥ अत्यन्त-संयोगे किम्? मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः॥

Time and stage of journey take द्वितीया when pervasion is implied. Thus—मासं &c. auspicious for the whole month &c. Why say अत्यन्तसंयोगे—if there is pervasion? Witness मासस्य &c.—Reads twice in the month ; क्रोशस्य &c. the mountain is some-where in this *Krosa* of journey.

मित—। अत्यन्तः अतिशयितः संयोगः अत्यन्तसंयोगः सर्वात्मसम्बन्धः। तस्मिन् द्योत्ये कालाध्वनोर्द्वितीया स्यात्। कल्याणी मङ्गला। मासं कल्याणी, सर्वं मासं

मङ्गला, इति गुणेन सर्वात्मसम्बन्धः। मासमधीते इति क्रियया सर्वात्मसम्बन्धः॥ धाना भृष्टयवः। गुड़श्च धानाश्च गुड़धानाः। मासं व्याप्य एताः इति द्रव्येण सर्वात्मसम्बन्धः॥ मासस्य द्विरधीते इति मासे द्विरधीते इत्यर्थः, न तु अध्ययनेन सर्वं मासं व्याप्नोतीति। व्याप्तौ सत्यामसत्याञ्च मासस्य अधिकरणत्वमस्ति। तदविवक्षायामत्यन्तसंयोगे मासमधीते इति द्वितीया, असति तस्मिन् मासस्य इति शेषे षष्ठी। न तु "अकथितञ्च" ( ५३९ ) इति "अकर्मकधातुभिः—" ( ५३९, वा ) इति वा कर्मसंज्ञा, इह धातोः सकर्मकत्वात् परिगणनाभावाच्च।

---

## सुबर्थप्रकरणे—तृतीया

### ५५९। स्वतन्त्रः कर्त्ता॥ १।४।५४॥

दी—। क्रियायां स्वातन्त्र्येण विवक्षितः अर्थः कर्त्ता स्यात्।

That, which is represented as having the initiative in the matter of any action, is designated the कर्त्ता—Agent—of the action.

मित—। कारकाणां सर्वेषामपि स्वं स्वं व्यापारं प्रति स्वातन्त्र्यमस्ति। तेषां प्रधानत्वेन विवक्षिते कस्यचित् व्यापारे इयं संज्ञा। तेन देवदत्तः पचति, असिश्छिनत्ति, स्थाली पचति इत्येवमादि भवति।

### ५६०। साधकतमं करणम्॥ १।४।४२॥

दी—। क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात्। तमब्ग्रहणं किम्? गङ्गायां घोषः।

That, which is most serviceable in the accomplishment of an act, is called the करण ( Instrumental case ) of that act. What is the necessity of attaching तमप् after साधक? Witness गङ्गायां घोषः—the dairy farm is on the bank of the Ganges—

which will not be available as an instance of अधिकरण if the necessity for तमप् is not recognised here.

मित—। प्रकृष्टं यथा तथा उपकारकं 'साधकतमम्'। कारकाणि सर्वाण्येव साधकानि। तत्र यस्य व्यापारात् परमव्यवहिता फलोत्पत्तिर्दृश्यते तत् साधकतमम्॥ इह कश्चिदाहारार्थी मधुराणि भोज्यान्यभिलक्ष्य यदि प्रार्थयते एभ्यो मधुरं मे देहीति तदा मधुरतममेव तस्मै दीयते। तथा साधकेषु कारकेषु स्थितेषु 'यदेषु साधकं तत्' इत्युक्ते साधकतममेव गम्यते। तत् 'साधकं करणम्' इत्येवोच्यतां किमनेन निष्प्रयोजनेन तमप्प्रत्ययेन, इति पृच्छति 'तमब्ग्रहणं किम्' इति। तत्रोच्यते, सत्यं विनापि तमपा करणे इष्टसिद्धिः, किन्तु अधिकरणे अनिष्टप्रसङ्गः। "आधारोऽधिकरणम्" (६३२—१।४।४५) इत्युक्तम्। आध्रियते अनेन अस्मिन् वा इति च आधारः। अनया व्युत्पत्त्या कश्चित् सर्वात्मना आधारः यथा तिलास्तैलस्य, कश्चित् एकदेशेन यथा वनं सिंहस्य, कश्चिच्च विषयतया यथा भोगाः अभिलाषस्य, इत्याधारस्य बहुविधत्वमुपजायते। तत् आधारः इत्युक्ते तिलेषु तैलमिति प्रकृष्ट एव आधारो ग्रहीष्यते। तेन गोनिवासस्थानं गङ्गातीरे वर्त्तते इत्यर्थे गङ्गायां घोषः इति न भविष्यति। तत् इह तमब्ग्रहणेन ज्ञाप्यते, कारकप्रकरणे तमपा विना प्रकर्षविज्ञानं न भवतीति। तेन "आधारः—" (६३२) इति तमपा विना निर्देशात् सर्वेषामेव आधाराणामधिकरणता, सप्तमी च विभक्तिः, गङ्गायां घोष इत्यादि प्रयोगश्च सिध्यति।

## ५६१। कर्त्तृकरणयोस्तृतीया॥ २।३।१८॥

दी—। अनभिहिते कर्त्तरि करणे च तृतीया स्यात्। रामेण बाणेन हतो बाली।

The third group of case-affixes should be attached to an undeclared कर्त्ता ( Nominative ) or करण ( Instrumental ). Thus रामेण &c.

मित—। 'अनभिहिते' इत्यधिकारप्राप्तम्। हत इति कर्मणि क्तः। एतेन कर्म उक्तं बालीति; अनुक्ते च कर्त्तृकरणे। रामेण इत्यनुक्ते कर्त्तरि तृतीया, बाणेन इत्यनुक्ते करणे।

दी—। "प्रकृत्यादिभ्य उपसंख्यानम्" (वार्त्तिक)। प्रकृत्या चारुः। प्रायेण याज्ञिकः। गोत्रेण गार्ग्यः। समेन एति। विषमेण एति। द्विद्रोणेन धान्यं क्रीणाति। सुखेन दुःखेन वा याति। इत्यादि।

"It should be noted that words of the प्रकृत्यादि class take तृतीया"। Thus प्रकृत्या &c.—amiable by nature, mostly a sacrificer; Gargya by lineage; moves steadily; moves unsteadily; buys two *dronas* of paddy; walks with ease or difficulty &c.

मित—। उपपदविभक्तिमाह प्रकृत्येति। प्रकृत्या चारुः इति क्रियाया अनुक्तेः कारकत्वाभावात् शेषे षष्ठी प्राप्ता तदपवादस्तृतीया। प्रायशब्दो बाहुल्यवाची। बहु यथा तथा याज्ञिक इत्यर्थे क्रियाविशेषणद्वितीयापवादस्तृतीया। गोत्रं गार्ग्यः इत्यर्थे गोत्रेण गार्ग्य इति प्रथमापवादस्तृतीया। सममेति विषममेति इति क्रियाविशेषणद्वितीयापवादस्तृतीया। एवं द्विद्रोणं यथा तथा धान्यं क्रीणाति, सुखं दुःखं वा याति इत्यादि। भाष्ये तु सर्वत्र हेतुतृतीया करणतृतीया वा उक्ता वार्त्तिकञ्च प्रत्याख्यातम्।

## ५६२। दिवः कर्म च॥ १।४।४३॥

दी—। दिवः साधकतमं कारकं कर्मसंज्ञं स्यात्। चात् करणसंज्ञम्। अक्षैरक्षान् वा दीव्यति।

The most serviceable in the accomplishment of the action, in connection with the root दिव to sport, is called कर्म। From the च in the rule, करणसंज्ञा is also available. Thus अक्षैः &c. where the तृतीया is from the करणसंज्ञा and द्वितीया from the कर्मसंज्ञा।

मित—। चात् सूत्रस्थात् चकारात् इत्यर्थः। समुच्चये चकारः इत्याशयः।

## ५६३। अपवर्गे तृतीया॥ २।३।६॥

दी—। अपवर्गः फलप्राप्तिः। तस्यां द्योत्यायां कालाध्वनोरत्यन्त-

संयोगे तृतीया स्यात् । अह्ना क्रोशेन वा अनुवाकोऽधीतः । अपवर्गे किम् ? मासमधीतो नायातः ।

अपवर्ग is attainment of the end. If that has to be indicated, time and stage of journey take तृतीया when there is pervasion. Thus अह्ना &c—the अनुवाक was chanted by the time the day passed or a *krosa* was gone over. Why अपवर्गे ? Witness मासम् &c.—read a month but was not mastered—where मासम् has द्वितीया by "कालाध्वनोः—" ( 558—2. 3. 5 ).

मित—। 'कालाध्वनोरत्यन्तसंयोगे' इति पूर्वसूत्रादनुवर्त्तते । 'नायातः' इति अपवर्गाभावः, ततो द्वितीया ।

५६४ । सहयुक्तेऽप्रधाने ॥ २।३।१९ ॥

दी—। सहार्थेन (क) युक्ते अप्रधाने (ख) तृतीया स्यात् । पुत्रेण सह आगतः पिता । एवं साकं सार्द्धं समं योगेऽपि । विनापि तद्योगं तृतीयां (ग) "वृद्धो यूना—" ( ९३१—१।२।६५ ) इत्यादि निर्देशात् ।

When connected with a word having the meaning of सह, the syntactically subordinate word in the sentence takes तृतीया । Thus पुत्रेण &c.—the father has come with the son—where पिता आगतः is the main sentence, पुत्रेण सह is a subordinate clause. Similarly when connected with साकम् &c. Even without visible connection, तृतीया is available if सहार्थ is implied, as is evident from statements like "वृद्धो यूना—" ।

मित—। (क) सह इति अर्थः अस्य सहार्थः सहशब्देन तुल्यार्थः शब्दः । तेन युक्ते । सूत्रे 'सह' इति सहार्थे लक्षणा । अन्यथा "पृथग्विनानानाभिस्तृतीया—" ( ९०३—२।३।३२ ) इत्यादिष्विव "सहेनाप्रधाने" इत्येव सूत्रयेत् ॥ (ख) अप्राधान्य

वाक्यगतं न तु पदार्थगतम्। तेन पिता सह आगतः पुत्रः इत्याद्यपि भवति ॥ (ग) 'विनापि तद्योगम्' इति प्रत्यक्षो योगो बोध्यः, आर्थस्तु अस्त्येव योगः।

**५६५। येनाङ्गविकारः ॥ २।३।२० ॥**

**दी—। येनाङ्गेन विकृतेन अङ्गिनो विकारो लक्ष्यते (क) ततस्तृतीया स्यात्। अक्ष्णा काणः। अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः (ख)। अङ्गविकारः किम्? अक्षि काणमस्य (ग)।**

तृतीया is attached to a limb through whose deformity deformity is attributed to the person. Thus अक्ष्णा &c. which means "marked by blindness which attaches to the eye". Why say अङ्गविकारः—deformity of the possessor of the limb? Witness अक्षि &c.—his eye is blind—where the eye, and not its possessor, is said to be blind. Hence अक्षि has प्रथमा not तृतीया।

मित—। (क) अङ्गमस्यास्तीति अङ्गः, अङ्गवान् पुरुषः। अर्शआद्यच्। तस्य विकारः अङ्गविकारः। 'अङ्गविकारः' इत्यस्य सान्निध्यात् 'येन' इति विकृतमङ्गं लक्ष्यते, अत आह 'येनाङ्गेन विकृतेन' इत्यादि ॥ (ख) काणत्वमक्ष्णः। तदाह 'अक्षिसम्बन्धिकाणत्वम्'। तेन 'विशिष्टः' तद्विशेषणवान् पुरुषः ॥ (ग) 'अक्षि काणमस्य' इत्यत्र काणत्वम् अक्षि एव विशिनष्टि न पुरुषम्, तेन न तृतीया ॥

**५६६। इत्थम्भूतलक्षणे ॥ २।३।२१ ॥**

**दी—। कञ्चित् प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात्। जटाभिस्तापसः। जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः।**

The indicator of some change which one has undergone takes तृतीया। Thus जटाभिः &c. The sense is—Distinguished by asceticism as indicated by matted locks. Hence जटा takes तृतीया।

मित—। भू प्राप्तौ चुरादिः। तस्मात् "आधृषाद्वा" इति णिजभावपक्षे कर्त्तरि क्तः, भूतः प्राप्तः। इत्थंशब्दः प्रकारमात्रपर इति नागेशः। प्रकारो भेदः अवस्थान्तरमित्यर्थः। इत्थं प्रकारविशेषं भूतः प्राप्त इत्थम्भूतः। यद्वा—इत्थम् अनेन प्रकारेण भूतः जातः इत्थम्भूतः। तस्य लक्षणम्, यत् तं लक्षयति तत्, इत्थम्भूतलक्षणम्। तत्र तृतीया स्यात्। तापसत्वमेव अवस्थान्तरम्, प्रकारविशेषः। तच्च जटाभिर्ज्ञाप्यते। तदाह 'जटाज्ञाप्य' इति।

## ५६७। संज्ञोऽन्यतरस्यां कर्मणि ॥ २।३।२२ ॥

दी। सम्पूर्वस्य जानातेः कर्मणि तृतीया वा स्यात्। पित्रा पितरं वा सञ्जानीते।

The कर्म of ज्ञा with सम् prefixed takes तृतीया optionally. Thus पित्रा &c.—Knows his father well.

मित—। अप्राप्ता तृतीया पक्षे विधीयते। 'अन्यतरस्याम्' इत्यव्ययमनव्ययं वा इति प्रागुक्तम्। अन्यतरस्यां कक्षायां तृतीया, एकस्यां तु कर्मत्वात् द्वितीया अस्त्येव। 'पित्रा' इत्यादि तु सुचिरप्रवासात् प्रत्यागते अभिज्ञाते पितरि। "सम्प्रतिभ्यामनाध्याने" ( २७१९—१।३।४६ ) इत्यात्मनेपदम्। आध्यानमुत्कण्ठापूर्वकस्मरणम्। तत्र परस्मैपदमुदाहार्य्यम् पाक्षिकी तृतीया तु अस्त्येव। पित्रा पितरं वा सञ्जानाति।

## ५६८। हेतौ ॥ २।३।२३ ॥

दी—। हेत्वर्थे तृतीया स्यात्। द्रव्यादिसाधारणं निर्व्यापारसाधारणञ्च हेतुत्वम्। करणत्वं तु क्रियामात्रविषयं व्यापारनियतञ्च। दण्डेन घटः। पुण्येन दृष्टो हरिः।

A word indicating हेतु—reason—takes तृतीया। हेतु affects equally द्रव्य, गुण and क्रिया ; a करण on the other hand affects क्रिया only. Again, a हेतु may or may not have activity, while a करण must possess activity. Thus दण्डेन etc. Here दण्ड has

activity because it is in motion, but it affects a द्रव्य, viz, घट and not a क्रिया। Hence the तृतीया is हेतौ। Similarly in पुण्येन etc. though पुण्य affects a क्रिया, viz, दर्शनक्रिया in दृष्ट, it has no activity ; hence the तृतीया is हेतौ not करणे।

मित—। हेतुः कारणम्, फलसाधनयोग्यः पदार्थः। हेतुः अर्थः अस्य 'हेत्वर्थः' हेतुवाचकः शब्दः। अनभिहिते इत्यधिकृतमस्ति। तेन हेतौ अनभिहिते साक्षादनुक्ते सति हेतुवाचकः शब्दस्तृतीयान्तो भवति इत्यर्थः। तृतीयाद्योत्या हेतुता इति भावः॥ ननु करणमपि फलसाधनयोग्यः पदार्थः। तदिह हेतुकरणयोः को भेदः इत्याह 'द्रव्यादीति क्रियामात्रेति' च। आदिपदेन गुणक्रिये गृह्येते। 'हेतुत्वं द्रव्यादिषु साधारणं' समानम्। यथा द्रव्यस्य तथा गुणस्य तथैव च क्रियायाः साधनयोग्यो हेतुः। पचान्तरे 'क्रियामात्रं करणस्य विषयः'। कारकत्वात् करणं क्रियामात्रस्य साधकम्। अयमेको भेदः॥ अपरमप्याह 'निर्व्यापारेति व्यापारेति' च। 'हेतुत्वं निर्व्यापारे अपि साधारणं' समानमस्ति यथा सव्यापारे। अस्ति च नास्ति च हेतौ व्यापारः। 'करणत्वं पुनर्व्यापारे नियतं' नियन्त्रितम्। अस्त्येव करणे व्यापारः इति भेदो द्वितीयः॥ व्यापारवान् दण्डः घटरूपस्य द्रव्यस्य हेतुः। निर्व्यापारं पुण्यं हरिदर्शनरूपायाः क्रियाया हेतुः॥ "हेत्वधीनः कर्त्ता कर्त्रधीनं करणम्" इति पुरुषोत्तमः॥ अर्थान्तरे हेतुशब्दमाह—

दी—। फलमपीह हेतुः। अध्ययनेन वसति।

In this rule, the object of an undertaking is also styled हेतु। Thus अध्ययनेन etc—stays for study.

मित—। अध्ययनेन वसति इत्यत्र प्रथमं वासः पश्चादध्ययनम्। तत् हेतुश्चेत् कारणम्, अध्ययनं न हेतुः। नापि तत् वासक्रियायाः करणम्। तृतीया तर्हि न प्राप्नोति। तदाह 'इह' अस्मिन् सूत्रे 'फलमपि हेतुः' इति। वासस्य फलमध्ययनम् तेन "हेतौ" इति तृतीया सिध्यति॥ "अनभिहिते" इत्येव, तेन घटस्य हेतुर्दण्डः इति स्पष्टोक्तौ "प्रातिपदिकार्थ—" ( ५३२—२।३।४६ ) इति प्रथमैव॥

दी—। गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका। अलं श्रमेण। श्रमेण साध्यं नास्ति इत्यर्थः। इह साधनक्रियां प्रति श्रमः करणम्॥ शतेन शतेन वत्सान् पाययति पयः। शतेन परिच्छिद्य इत्यर्थः।

A क्रिया which is understood, though not directly stated, also attaches the proper case-affix. Thus अलं etc; the sense is श्रमेण etc.—nothing is gained by toiling. Here श्रम is the करण of साधनक्रिया—the verb 'to gain'; hence तृतीया करणे। Again in शतेन etc. the sense is—grouping by the hundred. Thus शत is करण of परिच्छेदक्रिया and has तृतीया करणे।

मित—। 'गम्यमाना' ऊह्या। 'प्रयोजिका' साधिका। वाक्ये साक्षादनुक्तापि क्रिया यदि प्रकरणादिना गम्यते, तदा तत्प्रयुक्तं 'कारकत्वम्' आपद्यते, भवति च यथाविहिता 'विभक्तिः'। दृष्टान्तमाह 'अलं श्रमेण' इति। इह वाक्ये क्रिया न दृश्यते, अस्ति च गर्भिता अलंशब्दे। तथा हि, अलमिति वैयर्थ्ये सामर्थ्ये च वर्त्तते। 'अलं श्रमेण' श्रमो व्यर्थः इत्यर्थः। फलसाधनं प्रति व्यर्थ इति गम्यते। साधनक्रिया तर्हि गम्यमाना। तदाह 'साध्यं नास्ति' इति 'साधनक्रियां प्रति श्रमः करणम्' इति च॥ "अलमेतावद्भिः कुसुमैः" इत्यादिषु सामर्थ्येऽपि कारकता दृश्यते। एतावन्ति कुसुमानि फलसाधनं प्रति समर्थानि इत्यर्थः। ततो गम्यमानसाधनक्रियां प्रति कुसुमानां करणत्वे तृतीया॥ 'शतेन' इति परिच्छेदनक्रियां प्रति करणम्।

दी—। "अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया" (वार्त्तिक)। दास्या संयच्छते कामुकः। धर्म्ये तु भार्य्यायै संयच्छति।

When दा of the भ्वादि class is used, तृतीया comes in for चतुर्थी to indicate doings of the ill-mannered. Thus दास्या etc—the rake pays to the harlot—for दास्यै etc. But witness भार्य्यायै etc. with the dative ending to indicate righteous conduct.

मित—। अशिष्टानाम् अविनीतानां व्यवहारः आचारः तस्मिन् द्योत्ये। दाणः

इति भ्वादिगणीयस्य ग्रहणम्। जुहोत्यादेस्तु दास्यै संददाति॥ 'चतुर्थ्यर्थे तृतीया' इति चतुर्थ्यर्थ इह सम्प्रदानम्, सम्प्रदाने तृतीया इति भावः॥ "दाणश्च सा चेच्चतुर्थ्यर्थे" ( २७२८—१।३।५५ ) इति आत्मनेपदम्॥

---

## सुबर्थप्रकरणे—चतुर्थी।

### ५६९। कर्मणा यमभिप्रैति स सम्प्रदानम्॥ १।४।३२॥

**दी—। दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात्।**

He, who, for the completion of an act of gift, is approached with the thing given away, is called सम्प्रदान (Dative).

मित—। 'दानस्य' दानक्रियाया इत्यर्थः। 'कर्मणा' इति करणे तृतीया। अभिराभिमुख्ये, प्र प्रकर्षे। 'अभिप्रैति' प्रकर्षेण अभिगच्छति, क्रियानिष्पत्तये इति शेषः। देयवस्तुना उपायभूतेन यदभिमुखं प्रकर्षेण गमनम्, दानक्रियासिद्धये साधकं तत् कारकं सम्प्रदानमित्युच्यते॥ एतच्च वृत्त्यनुसारेण, अन्वर्थसंज्ञाविज्ञानात्। नागेशस्तु भाष्यमेव पुरस्कृत्य इह दानमित्युपलक्षणं क्रियामात्रस्य इत्याह। तेन क्रियाया निष्पत्तये यत्र कर्मणा कस्यचिदभिप्रायणमपरिहार्य्यं भवति तत्र तत्र संज्ञेयं प्रवर्त्तते। क्रियामात्रस्य उद्देश्यं सम्प्रदानमिति फलितम्।

### ५७०। चतुर्थी सम्प्रदाने॥ २।३।१३॥

**दी—। विप्राय गां ददाति। अनभिहिते इत्येव। दीयते अस्मै दानीयो विप्रः।**

The fourth triad of case-affixes is to be attached to a सम्प्रदान। Thus विप्राय &c. This is only when the सम्प्रदान is not expressly declared by words. Hence in दानीयो विप्रः—this Brahman is the recipient of the gift—though विप्र is the सम्प्रदान, it does not take चतुर्थी because it is declared as सम्प्रदान by the

word दानीयः which means दीयते अस्मै—given unto this man. The proper विभक्ति is प्रथमा by "प्रातिपदिकार्थ—" ( 532—2.3.46 ).

मित—। इह दानक्रियानिष्पत्तये गोरूपेण कर्मणा विप्रमभिगच्छति। तेन विप्रः सम्प्रदानं चतुर्थी च समर्थविभक्तिः। अभिहिते सम्प्रदाने उक्तार्थत्वात् प्रथमैव। दानीय इति दीयते अस्मै इत्यर्थे बाहुलकात् सम्प्रदाने अनीयर्। तेन सम्प्रदानमुक्तं भवतीति प्रथमया दानीयो विप्रः।

**दी—। "क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" ( वार्त्तिक )। पत्ये शेते।**

In an intransitive verb he too is सम्प्रदान for whom the act is intended. Thus पत्ये &c. the lying down being intended for the husband.

मित—। अकर्मकेषु कर्मणा उद्देशनमसम्भवम्। तत्र तु क्रिययैव य उद्दिष्टस्तस्य सम्प्रदानसंज्ञा भवति।

**दी—। "कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा" (वार्त्तिक)। पशुना रुद्रं यजते। पशुं रुद्राय ददातीत्यर्थः।**

Where there is a सम्प्रदान, the कर्म of the क्रिया is also styled the करण and the सम्प्रदान the कर्म। Thus पशुना &c. the sense being the पशु is offered to रुद्र ; hence रुद्र is सम्प्रदान and पशु the कर्म, yet पशु takes तृतीया the करणविभक्ति and रुद्र has द्वितीया the कर्मविभक्ति।

मित—। इदं छान्दसम्। दानार्थकयजधातुरस्य विषयः।

## ५७१। रुच्यर्थानां प्रीयमानः ॥ १।४।३३ ॥

**दी—। रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणः अर्थः सम्प्रदानं स्यात्। हरये रोचते भक्तिः। अन्यकर्तृकोऽभिलाषो रुचिः। हरिनिष्ठप्रीतेर्भक्तिः कर्त्री॥ प्रीयमाणः किम् ? देवदत्ताय रोचते मोदकः पथि॥**

In connection with roots meaning 'to cause pleasure' the person feeling pleasure is सम्प्रदान। Thus हरये &c.—Lord Hari likes devotion. रुचि is liking, pleasure &c. created by another. Here the pleasure, which is in Hari, has भक्ति for its creator; it is therfore रुचि। Why प्रीयमाण:? Witness देवदत्ताय &c. where पथिन्—way—feels no pleasure and takes आधारे सप्तमी।

मित—। रुचि: अर्थ: एषां रुच्यर्था:। प्रीत्या योज्यमान: प्रीयमाण:। प्रीञ् तर्पणे क्र्यादि:। कर्मणि शानच्। अथ रुचिरभिलाषो न वा? उच्यते—अभिलाषमात्रं तु न रुचि:, किन्तु रुचिरवस्तुसन्निधाने तद्दर्शनात् द्रष्टुर्मनसि जातो योऽभिलाष: स रुचि:। तदेवाह 'अन्यत्' प्रीयमाणापेक्षया अन्यत्, अर्थात् रुचिरं वस्तु 'कर्तृ' जनयितृ यस्य तादृश: 'अभिलाषो रुचि:'। प्रकृते किम् इत्याह 'हरौ निष्ठा' स्थितिर्यस्या: तस्या: 'प्रीते:' अभिलाषस्य इत्यर्थ: भक्तनिष्ठा 'भक्ति: कर्त्री' जनयित्री। एवमिह अन्यकर्तृकोऽभिलाष:। तत् 'प्रीयमाणो' हरिरत्र सम्प्रदानम्॥ एतेन हरि: प्रीयते, भक्ति: हरिं प्रीणयति इति कर्मसंज्ञापवाद: सम्प्रदानसंज्ञा। यदा तु प्रीयमाण इति दैवादिकात् कर्त्तरि शानच्, तदा हरि: प्रीयते, हरे: प्रीतेर्भक्तिर्विषयो भवति इति प्रतीति:। शेषषष्ठ्यां प्राप्तायां कारकत्वं सम्प्रदानत्वञ्च विधीयते। यद्वा— अस्मिन् पक्षे प्रीतेराधारो हरि: विषयो भक्ति: इति बोध:, अधिकरणसंज्ञापवादश्च सम्प्रदानसंज्ञा॥ पथि इति प्रीयमाणत्वाभावात् अधिकरणे सप्तमी॥

## ५७२। श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान:॥ १।४।३४॥

दी—। एषां प्रयोगे बोधयितुमिष्टः सम्प्रदानं स्यात्। गोपी स्मरात् कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वा। ज्ञीप्स्यमानः किम्? देवदत्ताय श्लाघते पथि॥

In connection with any of the roots श्लाघ, ह्नुङ्, स्था, शप the person intended to be enlightened is the सम्प्रदान। Thus गोपी etc. where श्लाघते means 'belauds' *i. e.* belauds Krishna in such

a way as to *make him guess her affection* ; ह्नुते means 'secretes', *i. e.*, hides Krishna from the view of other dairy-maids and thus *makes him guess her affection* ; तिष्ठते means 'stands', *i. e.*, stands in such a way as to *make him guess* etc., शपते means 'swears', *i. e.*, swears in a manner to *make him guess* etc. Why say ज्ञीप्स्यमानः—intended to be enlightened ? Witness देवदत्ताय etc, where पथि has अधिकरणसप्तमी because the पथिन् cannot be enlightened.

मित—। इह श्लाघ स्तुतौ, ह्नु सङ्गोपने, स्था गतिनिवृत्तौ, शप शपथे ॥ ज्ञप विज्ञापने। ज्ञपयितुमिष्यमाण इति ज्ञपेः सन्नन्तात् कर्मणि शानचि ज्ञीप्स्यमानः। "आप्ज्ञप्यृधामीत् (२६१९—७।४।५५) इतीत्। यमेव बोधयितुमिच्छति सः सम्प्रदानम्। स्तवेन, अन्यस्त्रीभ्यः सङ्गोपनेन, स्थितिविशेषेण, शपथोच्चारणेन च आत्मनः स्मरावस्थां बोधयितुमिच्छति कृष्णम्। तेन कृष्णस्य सम्प्रदानता। ज्ञीप्स्यमान इति कर्म उच्यते। तस्यैव कर्मसंज्ञापवादः सम्प्रदानसंज्ञा ॥

### ५७३। धारेरुत्तमर्णः ॥ १।४।३५ ॥

दी—। धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात्। भक्ताय धारयति मोक्षं हरिः। उत्तमर्णः किम् ? देवदत्ताय शतं धारयति ग्रामे ॥

In connection with धारि to owe the creditor is सम्प्रदान। Thus भक्ताय etc.—Hari owes salvation to the devotee. Why उत्तमर्णः ? Witness देवदत्ताय etc. where ग्राम is not the creditor and takes अधिकरणे सप्तमी।

मित—। उत्तमम् ऋणमस्य उत्तमर्णः ऋणदाता, अधमम् ऋणमस्य अधमर्णः ऋणग्रहीता। धृङ् अवस्थाने तुदादिः। हेतुमण्णिचि, धारिरवस्थापने। मोक्षो ध्रियते। हरिः मोक्षं धारयति, "गतिबुद्धि—" (५४०—१।४।५२) इत्यणिकर्त्तुः कर्मसंज्ञा।

५७४ । स्पृहेरीप्सितः ॥ १।४।३६ ॥

दी—। स्पृहयतेः प्रयोगे इष्टः सम्प्रदानं स्यात् । पुष्पेभ्यः स्पृहयति । ईप्सितः किम् ? पुष्पेभ्यो वने स्पृहयति । ईप्सितमात्रे इयं संज्ञा । प्रकर्ष-विवक्षायां तु परत्वात् कर्मसंज्ञा, पुष्पाणि स्पृहयति ।

In connection with स्पृह to desire, the desired is सम्प्रदान। Thus पुष्पेभ्यः etc. Why say ईप्सित ? Witness पुष्पेभ्यः etc., where वन is not the desired, and is अधिकरण। This is the designation when a mere desire is implied. If the desire is ardent ( ईप्सिततम ) कर्मसंज्ञा prevails, being subsequent to the सम्प्रदानसंज्ञा। Thus पुष्पाणि etc.

मित—। ईप्सिततमेऽपि ईप्सितत्वमस्त्येव, तदस्ति सम्प्रदानसंज्ञाया अवसरः। कर्मसंज्ञा तु परवर्त्तिनी सम्प्रदानसंज्ञां बाधते, तेन पुष्पाणि स्पृहयतीति। नागेशस्तु समाधत्ते "स्पृह धातुरिच्छामात्रवाची फलावच्छिन्नेच्छावाची च। आद्ये सम्प्रदानत्वम् अन्त्ये कर्मत्वम्" इति। अन्त्ये प्रकर्षोऽस्ति इत्याशयः ॥

५७५ । क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रतिकोपः ॥ १।४।३७ ॥

दी—। क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स उक्तसंज्ञः स्यात् । हरये क्रुध्यति द्रुह्यति ईर्ष्यति असूयति वा । 'यं प्रति कोपः' किम् ? भार्य्या-मीर्ष्यति मैनामन्यो द्राक्षीदिति । क्रोधोऽमर्षः । द्रोहोऽपकारः । ईर्ष्या अक्षमा । असूया गुणेषु दोषाविष्करणम् । द्रोहादयोऽपि कोपप्रभवा एव गृह्यन्ते, अतो विशेषणं सामान्येन 'यं प्रति कोपः' इति ।

In connection with roots having the sense of the roots क्रुध, द्रुह, ईर्ष्य, असूय, the person who is the object of anger is सम्प्रदान। Thus हरये etc.—Angry with Hari, Injures Hari, Intolerant of Hari, Belittles Hari. Why say यं प्रति कोपः ? Witness भार्य्याम् etc.—Does not tolerate that his wife should be seen by

another which implies no anger on the wife. क्रोध is Anger, द्रोह Injury, ईर्ष्या Intolerance, असूया Adverse criticism. Here द्रोह etc. are also taken as arising from कोप, hence the specification यं प्रति कोपः which is common to all of them.

मित—। असूय इति कण्ड्वादियगन्तः। क्रुधश्च द्रुहश्च ईर्ष्यश्च असूयश्च इति द्वन्द्वः। ते अर्था येषां तेषाम्॥ भार्य्यामीर्ष्यति इत्यत्र भार्य्यां प्रति न कोपः। तस्या अन्येन दर्शनं नेच्छति इत्येव। तेन न सम्प्रदानता॥ द्रोहादयः इत्यत्र आदिशब्देन ईर्ष्यासूययोर्ग्रहणम्। क्रोधस्तु स्फुटमेव कोपप्रभवः। न हि अकुपितः क्रुध्यति इति भाष्यात् प्ररुढ़कोप एव क्रोधः। तेन कुप इति न क्रुधार्थः। अत आह 'यं प्रति कोपः' इति, अन्यथा 'यस्मै कोपः' इत्येव ब्रूयात्। वस्तुतस्तु कुपेः प्रयोगे सम्प्रदानता नास्ति।

## ५७६। क्रुधद्रुहोरुपसृष्टयोः कर्म॥ १।४।३८॥

दी—। सोपसर्गयोरनयोर्योगे यं प्रति कोपस्तत् कारकं कर्मसंज्ञं स्यात्। क्रूरमभिक्रुध्यति अभिद्रुह्यति।

If क्रुध and द्रुह are preceded by some उपसर्ग, the कारक, which is the object of anger, becomes the कर्म। Thus क्रूरम् etc.

मित—। यत् उपसर्गेण युक्तं तदिह शास्त्रे उपसृष्टमित्युच्यते। तदाह सोपसर्गयोरिति।

## ५७७। राधीक्ष्योर्यस्य विप्रश्नः॥ १।४।३९॥

दी—। एतयोः कारकं सम्प्रदानं स्यात् यदीयो विविधः प्रश्नः क्रियते। कृष्णाय राध्यति ईक्षते वा। पृष्टो गर्गः शुभाशुभं पर्य्यालोचयतीत्यर्थः।

Of राध and ईक्ष that कारक regarding whom questions are asked is सम्प्रदान। Thus कृष्णाय etc.—thinks of the questions asked about Krishna. The sense is Garga, being asked about the future of Krishna, is reflecting on the good and bad points.

मित—। राधिरोचेश्च इह प्रश्नविषयपर्य्यालोचनमर्थः। विविधः प्रश्नः विप्रश्नः। यस्य सम्बन्धे विविधः प्रश्नः क्रियते तत् कारकं सम्प्रदानं स्यात् इत्यन्वयः॥ गर्गो गणकः॥

## ५७८। प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता॥ १।४।४०॥

दी—। आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्त्तनारूपव्यापारस्य कर्त्ता सम्प्रदानं स्यात्। विप्राय गां प्रतिशृणोति आशृणोति वा। विप्रेण मह्यं देहीति प्रवर्त्तितस्तत् प्रतिजानीते इत्यर्थः॥

In connection with श्रु preceded by प्रति or आङ्, the कर्त्ता of the antecedent act—the act of urging to promise—is सम्प्रदान। Thus विप्राय &c.—promises a cow to the Brahmana. The sense is, he was first coaxed by the Brahmana saying 'Give it unto me' and then he promised. Hence विप्र is सम्प्रदान।

मित—। गम्यमानपरशब्दयोगे प्रत्याङ्भ्यामिति पञ्चमी। श्रुवः इति षष्ठी। प्रतिपूर्वस्य च आङ्पूर्वस्य च शृणोतेः इत्यर्थः॥ 'प्रवर्त्तना' प्रेरणा अनुनयः। 'तत् प्रतिजानीते' दानं प्रतिजानीते इत्यर्थः॥

## ५७९। अनुप्रतिगृणश्च॥ १।४।४१॥

दी—। आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतम् उक्तसंज्ञं स्यात्। होत्रे अनुगृणाति प्रतिगृणाति वा। होता प्रथमं शंसति, तमध्वर्युः प्रोत्साहयति इत्यर्थः।

In connection with गॄ to speak out, preceded by अनु or प्रति, the कर्त्ता of the antecedent act is सम्प्रदान। Thus होत्रे etc. —Encourages the *Hota*. *Hota* first speaks out the *mantra*, the *Advaryu* encourages him by pronouncing the customary formula of encouragement.

मित—। गॄ शब्दे क्र्यादिः। तस्य आयुक्तस्य अनुकरणं 'गृणा' इति। तच्चेह धातुरूपेण गृहीतम्। अनुश्च प्रतिश्च अनुप्रती। ताभ्यां गृणा अनुप्रतिगृणा। तस्य अनुप्रतिगृणः। ङस् परे भत्वे "आतो धातोः" ( २४०—६।४।१४० ) इत्याकारलोपः। पूर्ववत् इहापि उपसर्गाभ्यां पृथक्सम्बन्धः। अनुगरः प्रतिगरः इति हि शंसितुः प्रोत्साहने वर्त्तते। प्रोत्साहनशब्दस्तु "शोंसामोदैव" इत्येवमादिकः।



## ५८०। परिक्रयणे सम्प्रदानमन्यतरस्याम्॥ १।४।४४॥

दी—। नियतकालं भृत्या स्वीकरणं परिक्रयणम्। तस्मिन् साधकतमं कारकं सम्प्रदानसंज्ञं वा स्यात्। शतेन शताय वा परिक्रीतः।

परिक्रयण is making one's own for a certain time by the payment of a salary. In that matter the most serviceable *Karaka* is optionally called सम्प्रदान। Thus शतेन etc. where शतेन has करणे तृतीया when the option is not exercised.

मित—। परिक्रयणस्य क्रयणस्य च भेदमाह—'नियतकालं स्वीकरणं' परिक्रयणम्, आत्यन्तिकस्वीकरणं क्रयणम्। भृत्या वेतनेन। साधकतममिति करणसूत्रादनुवर्त्तते। करणेन सह विकल्पः॥ अतः परमुपपदविभक्तिः प्रदर्श्यते।

दी—। "तादर्थ्ये चतुर्थी वाच्या" ( वार्त्तिक )। मुक्तये हरिं भजति॥

चतुर्थी is used to express the relation between the promoter and the promoted. Thus मुक्तये etc.—Worships Hari for salvation. Here the worship promotes salvation ; it is the *promoted* that takes चतुर्थी in such cases,

मित—। तस्मै इदं तदर्थम्। तस्य भावः तादर्थ्यम् तदर्थता। यदर्थं किञ्चिज्जातं तत्र चतुर्थी विभक्तिर्भवति। हरिभजनं मुक्त्यर्थम्, इति मुक्तये इति चतुर्थी। अर्थशब्देन चतुर्थीसमासे य उच्यते अर्थः, इहापि स एव॥

दी—। "क्लृपि सम्पद्यमाने च" ( वार्त्तिक )। भक्तिर्ज्ञानाय कल्पते सम्पद्यते जायते इत्यादि।

In connection with the sense of क्लृप to become, to be transformed, etc., the transformation takes चतुर्थी। Thus भक्तिः, etc. —devotion works for knowledge, etc.

मित—। उत्पत्तिः क्लृपधातोरर्थः। अत्र क्लृप् इति अर्थग्रहणम्। तस्मिन् क्लृपि, क्लृपधातोरर्थे, उत्पत्तौ गम्यमाने इति शेषः, सम्पद्यमानम् उत्पद्यमानं यत् तस्मिन् चतुर्थी स्यात्। अर्थग्रहणात् सम्पद्यते इत्याद्यप्युदाहरणम्।

दी—। "उत्पातेन ज्ञापिते च" ( वार्त्तिक )। वाताय कपिला विद्युत्।

That which is implied by a portent takes चतुर्थी। Thus वाताय etc.—Brown lightning portends a typhoon.

मित—। प्रकृतेरन्यथाभाव उत्पातः। तेन यत् ज्ञापितं सूचितमशुभं शुभं वा, तस्मिन् चतुर्थी स्यात्। विद्युत् रक्ता एव भवति। कपिलता तस्या अन्यथाभावः। तया च वातः सूच्यते इति वातशब्दाच्चतुर्थी।

दी—। "हितयोगे च" ( वार्त्तिक )। ब्राह्मणाय हितम्।

In connection with हित that which is benefitted takes चतुर्थी। Thus ब्राह्मणाय etc.

## ५८१। क्रियार्थोपपदस्य कर्मणि स्थानिनः॥ २।३।१४॥

दी—। क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनः, अप्रयुज्यमानस्य तुमुनः, कर्मणि चतुर्थी स्यात्। फलेभ्यो याति, फलानि आहर्त्तुं यातीत्यर्थः। नमस्कुर्मो नृसिंहाय, नृसिंहमनुकूलयितुमित्यर्थः। एवं 'स्वयम्भुवे नमस्कृत्य' इत्यादावपि।

A तुमुन् has near it a word denoting an act done with a view to another act. If the तुमुन् is suppressed, its कर्म will take चतुर्थी। Thus फलेभ्यो etc. means फलानि etc. In this आहर्त्तुम् has

याति near it, *i.e.*, it is क्रियार्थोपपद। Its कर्म is फलानि। If आहर्त्तुम् is suppressed, फलानि becomes फलेभ्यः। नमस्कुर्मो etc. means—we bow to win over Nrisinha etc. Similarly in स्वयम्भुवे etc.

मित—। स्थानिनः क्रियार्थोपपदस्य कर्मणि च चतुर्थी इत्यन्वयः॥ उप समीपे उच्चारितं पदम् 'उपपदम्'। क्रिया, किमपि कार्य्यम्, अर्थः प्रयोजनम् अस्याः 'क्रियार्था'। सा च क्रिया एव। यस्याः क्रियायाः क्रियान्तरं फलं, सा क्रियार्था क्रिया। क्रियार्था क्रिया उपपदं यस्य स 'क्रियार्थोपपदः'। कः सः? तुमुन्नन्तः शब्दः। फलानि आहर्त्तुं याति इत्युक्ते फलाहरणक्रियार्था यानक्रिया इति गम्यते। तदर्थकं यातीति पदम् आहर्त्तुमिति तुमुन्नन्तशब्दस्य उपपदम्। तेन आहर्त्तुम् इति तुमुन्नन्तः शब्दः इह क्रियार्थोपपदः। एतेन "क्रियार्था क्रिया उपपदं यस्य तस्य" इत्यर्थे "तुमुनः" इत्यायाति॥ यस्य शून्यं स्थानमात्रमस्ति स्वयं तु यः असन्निहितः स 'स्थानी अप्रयुज्यमानः' इति यावत्। एतेन "क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनः" इत्यस्य "अप्रयुज्यमानस्य तुमुनः" इति व्याख्यानं लभ्यते। तुमुन् इति तुमुन्नन्तस्य धातोरित्यर्थः। "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" ( ३१७५—३।३।१० ) इति तुमुनः क्रियार्थोपपदता॥ इदमप्यत्र दृश्यताम्—क्रियार्था क्रिया उपपदं यस्य—यस्य कृत्प्रत्ययस्य विधौ 'क्रियार्था क्रिया' इत्येतदुपपदत्वेन निर्दिश्यते—स क्रियार्थोपपदः। स च विधिः "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति। तेन 'तुमुन्' 'ण्वुल्' च इह लक्ष्यते। अप्रयुक्तायास्तुमुन्नन्तायाः ण्वुलन्ताया वा क्रियायाः कर्मणि चतुर्थी स्यादिति च सूत्रार्थो जायते। उदाहरणञ्च यथा 'फलानि चेतुं याति' इत्यर्थे फलेभ्यो यातीति, तथा 'सतः पालकोऽवतरति' इत्यर्थे सद्भ्योऽवतरतीत्यपि॥ इयन्तु कारकचतुर्थी द्वितीयापवादः॥ 'नृसिंहाय स्वयम्भुवे' इत्येतयोः क्रियायोगात् कारकत्वम्। "नमःस्वस्ति—" ( ५८३—२।३।१६ ) इति चतुर्थी तु न "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति वचनात्॥

**५८२। तुमर्थाच्च भाववचनात्॥ २।३।१५॥**

दी—। "भाववचनाश्च" ( ३१८०—३।३।११ ) इति सूत्रेण यो विहितः तदन्ताच्चतुर्थी स्यात्। यागाय याति, यष्टुं यातीत्यर्थः।

Words ending in affixes enjoined by the rule "भाववचनाश्च" take चतुर्थी। Thus यागाय याति, the meaning being यष्टुं याति—Goes to perform a sacrifice.

मित—। 'तुम्' इति तुमुन्प्रत्ययस्य अर्थो लक्ष्यते। तुम् तुमर्थः अर्थो यस्य तस्मात्। ननु क्रियायां क्रियार्थायां तुमुन् विहितः। तत् बह्वो हि तुमर्थाः प्रत्ययाः, किं ते सर्व एवेह गृह्यन्ते ? न, इति विशेषयति 'भाववचनात् तुमर्थात्' इति। "भाववचनाश्च" इति ये विहितास्त एव, न च "अण् कर्मणि च" ( ३१८१—३।३।१२ ) इति विहिता अपि॥ तुमर्थे विहिता भावप्रत्ययाः प्रकृतौ युक्ता अपि तुमर्थं न गमयन्ति यावत् अनेन सूत्रेण चतुर्थी न युक्ता। तत् 'यागाय याति' इत्यादयो यथा सूत्रस्यास्योदाहरणं, तथा "भाववचनाश्च" इत्यस्यापि॥

## ५८३। नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च॥ २।३।१६॥

दी—। एभिर्योगे चतुर्थी स्यात्। हरये नमः (क)। उपपदविभक्तेः कारकविभक्तिर्बलीयसी—नमस्करोति देवान् (ख)। प्रजाभ्यः स्वस्ति। अग्नये स्वाहा। पितृभ्यः स्वधा। अलमिति पर्य्याप्त्यर्थग्रहणम्। तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि। प्रभ्वादियोगे षष्ठी अपि साधुः। "तस्मै प्रभवति—" ( १७६५—५।१।१०१ ) "स एषां ग्रामणीः" ( १८१८—५।२।७८ ) इति निर्देशात्। तेन 'प्रभुर्बुभूषुर्भुवनत्रयस्य" इति सिद्धम् (ग)। वषडिन्द्राय।

चतुर्थी is the विभक्ति in connection with नमस् &c. Thus हरये नमः &c. But in नमस्करोति देवान् we do not get देवेभ्यः because the presence of करोति makes देव the कर्म, and a कारकविभक्ति always over-rules an उपपदविभक्ति। अलम् stands for anything that means पर्य्याप्ति। Thus दैत्येभ्यो &c. Both षष्ठी and चतुर्थी are correct here. This is indicated by "तस्मै प्रभवति—" where तस्मै takes चतुर्थी in connection with प्रभवति। Again षष्ठी is also

allowable in connection with प्रभु &c. as appears from the statement "स एषाम्—" where ग्रामणी in the sense of प्रभु gives षष्ठी to एषाम्। This defends the षष्ठी in भुवनत्रयस्य in "प्रभुर्बुभूषुः—"।

मित—। (क) हरये नमः इति हरिसम्बन्धिनी प्रणतिः इत्यर्थः। तेन हरेर्नमः इति षष्ठ्यां प्राप्तायां चतुर्थी विधीयते। एवमुत्तरत्रापि॥ (ख) बलीयसीति युगपत् प्राप्तौ कारकविभक्तिरेव प्रवर्त्तते उपपदविभक्तिर्निवर्त्तते इत्यर्थः। तथा च नमस्करोतीति व्यापारविशेषेण गुरुजनं व्याप्नोतीत्यर्थः। तेन नमस्करोति देवान् इत्यत्र कर्मत्वे द्वितीया कारकविभक्तिः प्राप्ता, पक्षे नमस्शब्दयोगादुपपदविभक्तिश्चतुर्थी च। कारकविभक्तिरेव भवति॥ (ग) अलमिति अर्थग्रहणम्, अन्यथा कथं "तस्मै प्रभवति—" इति सूत्रे चतुर्थी? "स एषां ग्रामणीः" इति सूत्रे षष्ठीदर्शनात् षष्ठी च भवति। अतः "प्रभुर्बुभूषुः—" इति षष्ठी सिद्धा।

**दी—। चकारः पुनर्विधानार्थः। तेन आशीर्विवक्षायां परामपि "चतुर्थी चाशिषि—" (६३१—२।३।७३) इति षष्ठीं बाधित्वा चतुर्थी एव भवति—स्वस्ति गोभ्यो भूयात्।**

The च in the rule is to enjoin a second time what seems modified by a subsequent rule, so far as स्वस्ति is concerned. Thus when an expression of hope is implied, the rule "चतुर्थी च—" (631—2. 3. 73) guides षष्ठी as an alternative; but the च here bars this alternative. Thus स्वस्ति गोभ्यो भूयात्—May good result to our cattle—and not स्वस्ति गवां भूयात् also.

मित—। पुनर्विधानेन एवशब्दार्थो लभ्यते। तेन एतैर्योगे चतुर्थी एव भवति नान्या विभक्तिः। तत् आशीरर्थेऽपि चतुर्थी एव भविष्यति न च पाक्षिकी षष्ठी।

## ५८४। मन्यकर्मण्यनादरे विभाषाऽप्राणिषु॥ २।३।१७॥

**दी—। प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात् तिरस्कारे। न त्वां तृणं मन्ये तृणाय वा। श्यना निर्देशात् तानादिकयोगे न। न त्वां तृणं मन्वे।**

चतुर्थी is optionally attached to the कर्म of मन of the दिवादि class when the कर्म is inanimate and implies contempt. Thus न त्वां &c.—I do not rate you even as a straw. The root being mentioned with श्यन् attached, मन of the तनादि class does not give चतुर्थी। Thus न त्वां &c.

मित—। 'मन्य' इति दैवादिकस्य श्यन्युक्तस्य अनुकरणम्। मन्यस्य कर्म मन्य-कर्म, तस्मिन्। आदरविरोधी अनादरः तिरस्कारः। विरोधार्थे नञ्। तिरस्कारस्तु न-शब्दयोगे एव गम्यते। तदभावे "त्वां तृणाय मन्ये" इति तत्त्वकथनमपि स्यात्॥ अनादरे इति मन्यकर्मविशेषणम्। अनादरद्योतकं यत् मन्यकर्म तत्र चतुर्थी इत्यर्थः इति नागेशः। अनादरश्च 'तृणाय' इत्यनेनैव गम्यते, तेन त्वामित्यस्य कर्मत्वेऽपि तत्र न चतुर्थी।

दी—। "अप्राणिष्वित्यपनीय नौकाकान्नशुकशृगालवर्जेष्विति वाच्यम्" (वार्त्तिक)। तेन 'न त्वां नावं मन्ये' इत्यत्र अप्राणित्वेऽपि चतुर्थी न, 'न त्वां शुने मन्ये' इत्यत्र प्राणित्वेऽपि भवत्येव।

From the rule, remove the word अप्राणिषु and put in नौकाकान्न-शुकशृगालवर्जेषु—except when the कर्म is नौ, काक, अन्न, शुक, शृगाल। Thus न त्वां नावं मन्ये will not have चतुर्थी though नौ is अप्राणिन्, and न त्वां शुने मन्ये has चतुर्थी though श्वन् is प्राणिन्।

मित—। सूत्रे अप्राणिषु इति मास्तु, भवतु च "नौकाकान्न—" इत्यादि। फलं तु नावमिति द्वितीया एव न चतुर्थी नौशब्दस्य वर्जितत्वात्, शुने इति च पाक्षिकी चतुर्थी वर्जितेषु श्वन्शब्दस्य अग्रहणात्।

५८५। गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि॥ २।३।१२॥

दी—। अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तः, चेष्टायाम्। ग्रामं ग्रामाय वा गच्छति। चेष्टायां किम्? मनसा हरिं व्रजति। अनध्वनि

किम्? पन्थानं गच्छति। गन्त्राधिष्ठिते अध्वन्येवायं निषेधः। यदा तु उत्पथात् पन्था एव आक्रमितुमिष्यते तदा चतुर्थी भवत्येव। उत्पथेन पथे गच्छति।

These two, द्वितीया and चतुर्थी, are attached to the कर्म of roots meaning 'to move' when a bodily effort is actually being made, but not if the कर्म is a road. Thus ग्रामं &c. Why say चेष्टायाम्? Witness मनसा &c.—mentally reaches Hari. Why say अनध्वनि? Witness पन्थानं &c. This prohibition applies only to a road actually taken by the traveller. The road will certainly take the चतुर्थी when one is moving for it from a wrong track. Thus उत्पथेन &c.

मित—। अध्वशब्दः अर्थपरः, तेन मार्गवर्त्मप्रभृतिष्वपि निषेधः। चेष्टा शारीरी न तु मानसी। अधिष्ठितः आक्रान्तः। 'उत्पथात्' उत्पथं परित्यज्य इति ल्यब्लोपे पञ्चमी। उत्पथेन पथे गच्छतीति येनैव उन्मार्गेन मार्गाच्युतः तेनैव मार्गमारोढुं चलतीत्यर्थः। उत्पथेनेति करणे तृतीया। मार्गेशस्तु उत्पथेन गन्तुमशक्तः इति पूरयित्वा व्याचष्टे॥ ननु कर्मणि विहितैव द्वितीया तत् किमिह पुनर्द्वितीया विधीयते? द्वितीयेति अनुच्यमाने परत्वादनेन चतुर्थी एव प्राप्नोति द्वितीयाया अपवादः। 'चतुर्थी वा' इत्युक्ते "पञ्चम्यपाङ्परिभिः" ( ५९८—२।३।१० ) इत्यतः अनुवृत्ता पञ्चमी इहापि सम्बध्येत चतुर्थ्या च सह विकल्प्येत। अतः सुष्ठूक्तं 'द्वितीयाचतुर्थ्यौ' इति॥

---

## सुबर्थप्रकरणे—पञ्चमी

### ५८६। ध्रुवमपायेऽपादानम्॥ १।४।२४॥

दी—। अपायो विश्लेषः। तस्मिन् साध्ये ध्रुवम् अवधिभूतं कारकमपादानं स्यात्।

अपाय is separation. When this has to be effected, the Karaka which is relatively fixed is called अपादान।

मित—। अवधिः सीमा प्रान्तः। यत आरभ्य विश्लेषो निरूप्यते तत्, चलं वा वा अचलं वा, ध्रुवमितीह कथ्यते।

## ५८७। अपादाने पञ्चमी ॥ २।३।२८ ॥

दी—। ग्रामादायाति। धावतोऽश्वात् पतति। कारकं किम्? वृक्षस्य पर्णं पतति।

An अपादान takes the पञ्चमी case-ending. Thus ग्रामात् &c. In धावतः &c. though the horse too is in motion, it is, with reference to the rider falling from it, relatively fixed. Why say कारक? Witness वृक्षस्य &c.—A leaf of the tree falls—in answer to the question "What is it falling?" If the question be "Whence does the leaf fall?" the answer is of course वृक्षात् पर्णं पतति making वृक्ष a कारक, viz, अपादान।

मित—। धावन्नपि पततः सादिनः अपायं प्रति अश्वः अवधिरित्यपादानम्। 'वृक्षस्य' इति अवयवावयविभावमात्रमुच्यते, अतो न वृक्षः कारकम्।

दी—। "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" (वार्त्तिक)। पापाज्जुगुप्सते विरमति। धर्मात् प्रमाद्यति।

The object of abhorrence, cessation and lapse is अपादान। Thus पापात् &c.

मित—। जुगुप्सादीनां विषयः अपादानं स्यादिति वक्तव्यम्।

## ५८८। भीत्रार्थानां भयहेतुः ॥ १।४।२५ ॥

दी—। भयार्थानां त्राणार्थानाञ्च प्रयोगे भयहेतुरपादानं स्यात्। चोराद्बिभेति। चोरात् त्रायते। भयहेतुः किम्? अरण्ये बिभेति त्रायते वा।

The cause of fright is अपादान in connection with verbs

meaning 'to fear' or 'to save'. Thus चौरात् &c. Why say भय-हेतुः ? Witness अरण्ये &c., the cause of fright being not अरण्य but the beasts of prey in it.

मित—। भयं भीः, त्राणं वा। उभयत्र भावे क्विप्। हेतुतृतीयाया अपवादः।

## ५८९। पराजेरसोढ़ः॥ १।४।२६॥

दी—। पराजेः प्रयोगे असह्यः अर्थः अपादानं स्यात्। अध्ययनात् पराजयते, ग्लायतीत्यर्थः। असोढ़ः किम्? शत्रून् पराजयते, अभिभवतीत्यर्थः।

In connection with the root जि preceded by परा, that which is intolerable is अपादान। Thus अध्ययनात् &c. the sense being 'sick of study.' Why say असोढ़ः ? Witness शत्रून् &c., the sense being 'overpowers enemies.'

मित—। ग्लानिश्च अभिभवनञ्च पराजेरर्थः। आद्ये अकर्मको धातुः, सूत्रस्य च विषयः। तदाह ग्लायतीत्यर्थः॥ ननु जिधातुरभिभवे एव पठितः। सत्यम्, अभिभवस्तु न्यूनीभवनं न्यूनीकरणञ्च इति द्विधा व्याख्यातः। अत्र न्यूनीभवनमिति ग्लानिमाह॥

## ५९०। वारणार्थानामीप्सितः॥ १।४।२७॥

दी—। प्रवृत्तिविघातो वारणम्। वारणार्थानां धातूनां प्रयोगे ईप्सितोऽर्थः अपादानं स्यात्। यवेभ्यो गां वारयति। ईप्सितः किम्? यवेभ्यो गां वारयति क्षेत्रे।

वारण is check of inclination. In connection with roots implying check of inclination, the wished for is अपादान। Thus यवेभ्यो &c., the wished for being यव। Why ईप्सितः ? Witness

यवेभ्यो &c. where चेत्र is not the wished for and has अधिकरणे सप्तमी। 'Wished for' means what the agent of check wishes.

मित—। 'ईप्सितः' इति कर्त्तुरीप्सितः। 'यवेभ्यः' इत्यत्र यवा ईप्सिताः, नो चेत् कथं तेभ्यो वारयति? गौश्च ईप्सिता अन्यथा कथं तामेव वारयति? वारणक्रियया तु प्राधान्येन गौरेव व्याप्ता। तदिह कर्त्तुरीप्सिता यवाः, ईप्सिततमा तु गौः। तेन यवा अपादानं, गौः कर्म। एवमग्नेर्माणवकं वारयतीत्यादिष्वपि॥ 'ईप्सितः' इति कर्मण ईप्सित इति व्याख्याने तु "अग्नेर्माणवकं वारयति" "कूपादन्धं वारयति" इति भाष्योक्तमुदाहरणद्वयं न सिध्यति॥

५९१। अन्तर्द्धौ येनादर्शनमिच्छति॥ १।४।२८॥

दी—। व्यवधाने सति यत्कर्तृकस्य आत्मनो दर्शनस्य अभावमिच्छति तदपादानं स्यात्। मातुर्निलीयते कृष्णः। अन्तर्द्धौ किम्? चौरान् न दिदृक्षते (क)। इच्छतिग्रहणं किम्? अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्। देवदत्तात् यज्ञदत्तो निलीयते।

When one is in hiding, the person intended to avoid is अपादान। Thus मातुः &c. Why say अन्तर्द्धौ—if screened? Witness चौरान् &c.—does not like to meet thieves. The person does not actually go a-hiding, though the desire to avoid thieves exists; hence चौरान् and not चौरेभ्यः। Why add इच्छति? This is to have the अपादानसंज्ञा though discovery follows in spite of the wish to avoid. Thus देवदत्तात् &c.

मित—। 'अन्तर्द्धिः' नेत्रयोरगोचरे स्थितिः। यद्वा अन्तर्द्धिस्तिरस्करणी, करणे किः। व्यवधानमित्यर्थः॥ तस्मिन्निति भावे सप्तमी। 'येन' इति कर्त्तरि तृतीया। यत्कर्तृकमदर्शनमित्यर्थः। कस्य अदर्शनम्? आत्मनः अदर्शनम्, आत्मकर्मकम्, अन्तर्हितपुरुषकर्मकमदर्शनमिति यावत्। सूत्रे येन इति कर्त्तरि तृतीया। षष्ठी तु

न, आत्मन इति कर्मणो गम्यमानत्वात् "उभयप्राप्तौ कर्मणि" ( ६२४—२।३।६६ ) इति नियमाच्च। वार्त्तिककारस्तु कर्त्तर्य्यपि पाचिकीं षष्ठीमनुमन्यते सत्यं, परं न हि वार्त्तिककारस्य दर्शनेन सूत्रकारस्य प्रवृत्तिः॥ ( क ) चौरान् द्रष्टुं नेच्छति। कुतः ? चौरकर्तृकमात्मनः अदर्शनमिच्छतीत्यतः। तत् सूत्रोपात्तमन्यत् सर्वमस्ति, अन्तर्द्धिस्तु नास्ति। तेन नापादानम्॥

## ५८२। आख्यातोपयोगे॥ १।४।२९॥

**दी—। नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात्। उपाध्यायादधीते। उपयोगे किम्? नटस्य गाथां शृणोति।**

When instruction is received after due initiation (उपयोगे) the instructor is अपादान। Thus उपाध्यायात् &c. Why say उपयोगे? Witness नटस्य etc.—Listens to the chanting of the actor.

मित—। 'नियमो' ब्रह्मचर्य्यादिः। ब्रह्मचर्य्यादिकमवलम्ब्य विद्याग्रहणमुपयोगः। 'आख्याता' वक्ता उपदेष्टा इत्यर्थः। गाथाश्रवणं नियमं नापेचते, तत् नटस्य अपादानता नास्ति। उच्चारिताः शब्दाः नटमुखान्निःसरन्ति इति बुद्धिकृता अपि अपादानता नेह विवच्यते। तत् नटस्येति शेषलचणा षष्ठी॥ ननु अविवचिता चेदपादानता "अकथितञ्च" ( ५३९—१।४।५२ ) इति कर्मता प्राप्नोति। मैवं, तत्र परिगणनं कृतं, शृणोतिश्च न गृहीतः। तदस्त्येव शेषत्वम्। इह 'नटस्य शृणोति' इत्येवान्वयः, 'नटस्य गाथाम्' इति सति तु कारकत्वमेव न स्यात्॥

## ५८३। जनिकर्त्तुः प्रकृतिः १।४।३०॥

**दी—। जायमानस्य हेतुरपादानं स्यात्। ब्रह्मणः प्रजाः प्रजायन्ते।**

The material cause of that which is born is अपादान। Thus ब्रह्मणः etc.

मित—। जनिर्जन्म। भावे इञ्। जनेः कर्त्ता जनिकर्त्ता जायमानः पदार्थः। प्रकृतिरुपादानकारणं हेतुशब्देनेह कथितम्।

५९४। भुवः प्रभवः ॥ १।४।३१ ॥

दी—। भवनं भूः। भूकर्त्तुः प्रभवस्तथा। हिमवतो गङ्गा प्रभवति, तत्र प्रकाशते इत्यर्थः।

भू means 'becoming', 'appearing' etc. Of something that discloses itself, the place of first appearance is अपादान। Thus हिमवतः etc. ; the meaning is, there it first appears.

मित—। कर्त्तुः इति पूर्वसूत्रादनुवर्त्तते। भवनं भूः आविर्भावः। भुवः कर्त्ता भूकर्त्ता आविर्भूतः पदार्थः। तस्य प्रभवः प्रथमप्रकाशस्थानम् अपादानं स्यात्।

दी—। "ल्यब्लोपे कर्मण्यधिकरणे च" (वार्त्तिक)। प्रासादात् प्रेक्षते। आसनात्प्रेक्षते। प्रासादमारुह्य आसने उपविश्य प्रेक्षते इत्यर्थः। श्वशुराज्जिह्रेति, श्वशुरं वीक्ष्य इत्यर्थः।

When a word ending in ल्यप् is suppressed, its कर्म and अधिकरण take the पञ्चमी affixes. Thus प्रासादात् etc. the meaning being प्रासादमारुह्य etc. Similarly श्वशुरात् etc. means श्वशुरं वीक्ष्य etc.

मित—। ल्यबन्तशब्दस्य लोपे सति तस्य कर्मणि अधिकरणे च पञ्चमी स्यात्। पञ्चमी विधीयते न तु अपादानसंज्ञा। कर्मत्वमधिकरणत्वञ्च अव्याहतमेव।

दी—। गम्यमानापि क्रिया कारकविभक्तीनां निमित्तम्। कस्मात् त्वम्? नद्याः।

Even a verb understood enjoins case-affixes. Thus कस्मात् etc.—Whence are you? From the stream.

मित—। कस्मादित्यत्र आगतः इति क्रिया गम्यते। तेन अपाययोगे अपादानता पञ्चमी च।

दी—। "यतश्चाध्वकालनिर्माणं तत्र पञ्चमी, तद्युक्तादध्वनः प्रथमासप्तम्यौ, कालात् सप्तमी च वक्तव्या" (वार्त्तिक)। वनात् ग्रामो योजनं योजने वा। कार्त्तिक्याः आग्रहायणी मासे।

The starting point in the measurement of the length of time and space takes पञ्चमी, the space measured takes प्रथमा and सप्तमी and the time takes सप्तमी। Thus वनात् etc.

मित—। निश्चितम् इयत्तया निरूपितं मानं 'निर्माणम्'। 'यतः' यम् अवधिं कृत्वा 'अध्वनः कालस्य च निर्माणं' परिच्छेदः क्रियते 'तत्र पञ्चमी' स्यात्। 'तेन' निर्माणेन 'युक्तात्' तथापरिच्छिन्नादित्यर्थः 'अध्वनः प्रथमासप्तम्यौ' स्तः 'कालाच्च सप्तमी' स्यात्। हरदत्तस्तु 'तेन' पञ्चम्यन्तेन 'युक्तात्' इति व्याख्यत्। कृत्तिकायुक्ता पौर्णमासी कार्त्तिकी। "नक्षत्रेण युक्तः कालः" (१२०४—५।२।३) इत्यण्। अग्रे हायनमस्या अग्रहायणा। सैव आग्रहायणी। प्रज्ञाद्यण्॥ बुद्धिकृतमपायमपेक्ष्य तु इयमपादानपञ्चमी॥ अतः परमुपपदविभक्तिर्निरूप्यते॥

## ५९५। अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते॥ २।३।२९॥

दी—। एतैर्योगे पञ्चमी स्यात्। 'अन्य' इत्यर्थग्रहणम्, 'इतर'-ग्रहणं प्रपञ्चार्थम्। अन्यो भिन्न इतरो वा कृष्णात्। आराद्वनात्। ऋते कृष्णात्। पूर्वो ग्रामात्। दिशि दृष्टः शब्दो दिक्शब्दः। तेन सम्प्रति देशकाल-वृत्तिना योगेऽपि भवति। चैत्रात् पूर्वः फाल्गुनः। अवयववाचियोगे तु न, "तस्य परमाम्रेडितम्" (८३—८।१।२) इति निर्देशात्। पूर्वं कायस्य। अञ्चूत्तरपदस्य तु दिक्शब्दत्वेऽपि "षष्ठ्यतसर्थ—" (६०९—२।३।३०) इति षष्ठीं बाधितुं पृथग्ग्रहणम्। प्राक् प्रत्यक् वा ग्रामात्। आच्—दक्षिणा ग्रामात्। आहि—दक्षिणाहि ग्रामात्॥

पञ्चमी is the विभक्ति in connection with अन्य, आरात्, इतर, ऋते, दिक्शब्द, compounds ending with some derivative of the root अञ्च to go, words with आच् or आहि affixed. अन्य means अन्यार्थ, and इतर, though अन्यार्थ, is included as a specific instance only. Thus अन्यो etc. आराद्वनात्—near or away from the woods.

ऋते etc.—Except Krishna. पूर्वो etc.—to the east of the village. दिक्शब्द is not necessarily a word indicating a direction, but one that is seen designating a direction. Hence all instances where such words are used for time and place are also included. Thus चैत्रात् etc.—Phalguna precedes Chaitra. The rule "तस्य परम्—" ( 83 ) however indicates that when a दिक्शब्द is applied to a portion of a whole it does not direct the पञ्चमी विभक्ति। Thus पूर्वं कायस्य—the fore-part of the body. अञ्चूत्तरपद words are also दिक्शब्द, yet they are separately mentioned to bar the षष्ठी guided by "षष्ठ्यत—" ( 609 ). Thus प्राक् etc.—to the east or west of the village. दक्षिणा etc.—to the south of the village.

मित—। षष्ठ्या अपवादोऽयं योगः। 'प्रपञ्चो' विस्तरः। आरादित्यव्ययं दूरसमीपयोर्वर्त्तते। दिग्दृष्टः शब्दो दिक्शब्दः, शाकपार्थिवादिः। 'सम्प्रति' प्रयोगकाले 'देशे च काले च वृत्तिः' अभिधानं यस्य तथाविधेन दिक्शब्देन 'योगेऽपि' पञ्चमी भवति॥ प्राच्यां दिशि इति प्राचीशब्दादस्तातिः। तस्य "अञ्चेर्लुक्" ( १९८०—५।३।३० ) इति लुक्। ततो "लुक् तद्धितलुकि" ( १४०८—१।२।४९) इति ङीपोऽपि लुक्। तेन 'प्राक्' इति रूपम्। दिक्शब्देति रूढ़ानां पूर्वादीनामेव ग्रहणम्॥

दी—। "अपादाने पञ्चमी" ( ५८७—२।३।२८ ) इति सूत्रे 'कार्त्तिक्याः प्रभृति' इति भाष्यप्रयोगात् प्रभृत्यर्थयोगे पञ्चमी। भवात् प्रभृति आरभ्य वा सेव्यो हरिः।

In the भाष्य under the rule "अपादाने—" ( 587 ) occurs the phrase कार्त्तिक्याः प्रभृति with पञ्चमी in कार्त्तिक्याः। Hence the inference that words, meaning प्रभृति, direct पञ्चमी। Thus भवात् etc.

मित—। प्रभृति इत्यव्ययमवधिद्योतकम्। आरम्भणं तु अवधिद्योतकं ग्रहणद्योतकं वा। अन्यत्र द्वितीया। "अवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूलोकः"।

दी—। "अपपरिबहिः—" ( ६६६—२।१।१२ ) इति समासविधानात् ज्ञापकात् बहिर्योगे पञ्चमी । ग्रामादबहिः ।

The rule "अपपरि—" ( 666 ) directs the compounding of बहिस् with पञ्चम्यन्त words. Hence the inference that पञ्चमी is the विभक्ति in connection with बहिस्।

मित—। "अपपरिबहिरञ्चवः पञ्चम्या" इति हि सूत्रम् । व्यर्थं तत् यदि बहिस्शब्दयोगे पञ्चमी न स्यात् । तत् समासविधिरेव ज्ञापयति बहिस्शब्दयोगे पञ्चमी भवतीति ॥ ननु ज्ञाप्यतां पञ्चमी, परं पञ्चम्येव इति तु न विज्ञाप्यते । समासविधिः पञ्चम्याः साधुतां वक्ति, न च पुनर्न्यायसिद्धायाः षष्ठ्या असाधुतामपि । एतेन "करस्य करभी बहिः" इत्यमरोक्तिर्व्याख्याता ॥

## ५९६ । अपपरी वर्जने ॥ १।४।८८ ॥

दी—। एतौ वर्जने कर्मप्रवचनीयौ स्तः ।

अप and परि are कर्मप्रवचनीय when implying exclusion.

## ५९७ । आङ् मर्य्यादावचने ॥ १।४।८९ ॥

दी—। आङ् मर्य्यादायामुक्तसंज्ञः स्यात् । वचनग्रहणादभिविधावपि ।

आङ् implying exclusion is a कर्मप्रवचनीय। Here वचने in the rule is apparently superfluous, hence it has to be interpreted as including अभिविधि, inclusion, also.

मित—। मर्य्यादा त्यागस्य अवधिः, ग्रहणस्यावधिरभिविधिः ॥ अत्र मर्य्यादायामित्यनुक्त्वा 'मर्य्यादावचने' इत्याह । गुरुनिर्देशस्य प्रयोजनम्—'मर्य्यादाया वचनम्' उक्तिर्यस्मिन् सूत्रे क्रियते तस्मिन् स्थितः यः 'आङ्' स कर्मप्रवचनीयः स्यात्—इत्यं व्याख्यायतामिति । कस्मिन् सूत्रे तत् क्रियते ? "आङ् मर्य्यादाभिविध्योः" ( ६६७—२।१।१३ ) इत्येतस्मिन् । तत्राङो मर्य्यादा च अभिविधिश्च अर्थः । इहापि स एव ॥

५९८। पञ्चम्यपाङ्परिभिः ॥ २।३।१० ॥

दी—। एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात्। अप हरेः, परि हरेः, संसारः। परिरत्र वर्जने। लक्षणादौ तु हरिं परि। आ मुक्तेः संसारः। आ सकलात् ब्रह्म।

पञ्चमी is the विभक्ति in connection with the Karmapravachaniyas अप, परि and आङ्। Thus अप etc.—worldly attachments exclude Hari. When परि implies लक्षण etc. ( 552—1. 4. 90 ), there is of course द्वितीया as in हरिं परि। With आङ् implying exclusion ( मर्य्यादा ) आ मुक्तेः etc.—Worldly attachments persist until salvation ; inclusion ( अभिविधि ) is implied in आ सकलात् etc.—Brahman includes everything.

मित—। इह द्वितीयापवादः पञ्चमी। अप हरेः, परि हरेः संसार इति हरिं वर्जयित्वा संसारसुखमनुभूयते इत्यर्थः॥ 'लक्षणादौ' इति "लक्षणेत्थम्भूत—" ( ५५२—१।४।९० ) इति लक्ष्यते। आ मुक्तेरिति मर्य्यादा, आ सकलादित्यभिविधिः॥

५९९। प्रतिः प्रतिनिधिप्रतिदानयोः ॥ १।४।९२ ॥

दी—। एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात्।

प्रति is a कर्मप्रवचनीय when implying deputyship or exchange.

मित—। मुख्यसदृशः प्रतिनिधिः, दत्तस्य निर्य्यातनं प्रतिदानम्।

६००। प्रतिनिधिप्रतिदाने च यस्मात् ॥ २।३।११ ॥

दी—। अत्र कर्मप्रवचनीययोगे पञ्चमी स्यात्। प्रद्युम्नः कृष्णात् प्रति। तिलेभ्यः प्रति यच्छति माषान्।

In connection with a कर्मप्रवचनीय there is पञ्चमी in one whose deputy another is, and in one in exchange for which an offer

is made. Thus प्रद्युम्नः etc.—Pradyumna is Krishna's deputy; तिलेभ्यः &c.—Pulse is offered in exchange for sesamum.

मित—। यस्मादिति षष्ठ्यर्थे पञ्चमी सौत्री। यस्य प्रतिनिधिः यस्य च प्रतिदानं तत्र पञ्चमी स्यात्। सूत्रे षष्ठ्यर्थे पञ्चमीकरणात् यस्य प्रतिनिधिः इत्यर्थे यस्मात् प्रतिनिधिः इत्यपि साधुः। एवं यस्मात् प्रतिदानमिति च॥

## ६०१। अकर्त्तर्य्यृणे पञ्चमी॥ २।३।२४॥

**दी—। कर्त्तृवर्जितं यत् ऋणं हेतुभूतं ततः पञ्चमी स्यात्। शतात् बद्धः। अकर्त्तरि किम्? शतेन बन्धितः।**

If a debt is not treated as a कर्त्ता but as a हेतु only, it takes the पञ्चमी विभक्ति। Thus शतात् बद्धः—Imprisoned for a hundred. Here शत is the amount of debt and is also the हेतु for imprisonment. Hence पञ्चमी barring हेतु तृतीया। Why अकर्त्तरि? Witness शतेन &c.—Caused to be imprisoned by a hundred. Here the debt urges the creditor to procure the imprisonment of the debtor; thus the debt is treated as कर्त्ता by the rule "तत्प्रयोजको हेतुश्च" (2575—1. 4. 55) and we have तृतीया in the अनुक्तकर्त्ता।

मित—। 'हेतौ' इति पूर्वसूत्रादनुवर्त्तते। अकर्त्तरि ऋणे हेतौ पञ्चमी इत्यन्वयः। यत् ऋणमधमर्णस्य बन्धने हेतुः तत्र पञ्चमी स्यात्। हेतुतृतीयापवादः। यदा तु तत् ऋणं बन्धनविषये उत्तमर्णं प्रयोजयति तदा प्रयोजकत्वात् तत् कर्त्तृसंज्ञां लभते "तत्प्रयोजको हेतुश्च" (२५७५—१।४।५५) इति। पञ्चमी तत्र न प्रवर्त्तते, अनुक्ते कर्त्तरि तृतीयैव। तथाहि—(अणिचि) उत्तमर्णः तं बद्धवान्। (णिचि) शतं प्रयोजककर्त्तृ उत्तमर्णेन प्रयोज्यकर्त्रा तं बन्धितवान्। कर्मणि—शतेन उत्तमर्णेन स बन्धितः।

## ६०२। विभाषा गुणेऽस्त्रियाम्॥ २।३।२५॥

**दी—। गुणे हेतौ अस्त्रीलिङ्गे पञ्चमी वा स्यात्। जाड्यात् जाड्येन वा बद्धः। गुणे किम्? धनेन कुलम्। अस्त्रियां किम्? बुद्ध्या मुक्तः।**

When a गुण is a हेतु and is not in the feminine, it optionally takes पञ्चमी। Thus जाड्यात् &c. Why say गुणे ? Witness धनेन &c. where धन not being a गुण does not take पञ्चमी। Why अस्त्रियाम् ? Witness बुद्ध्या &c.—where बुद्धि, though a गुण, does not take पञ्चमी because it is feminine.

मित—। हेतौ इत्यनुवर्त्तते। पञ्चमी वा, पक्षे तृतीया॥ धनमिति द्रव्यं न गुणः। अतस्तृतीयैव न पञ्चमी। बुद्धिरिति गुणः द्रव्यनिष्ठत्वादक्रियात्वाच्च। स्त्रीत्वान्न पञ्चमी॥

**दी—। 'विभाषा' इति योगविभागात् अगुणे स्त्रियाञ्च क्वचित्। धूमादग्निमान्। नास्ति घटोऽनुपलब्धेः॥**

Here if it be supposed that विभाषा may be separated from its connection with the remainder of the rule and may constitute a rule by itself, then, with the अनुवृत्ति of हेतौ and of पञ्चमी, this gives हेतौ पञ्चमी विभाषा—पञ्चमी is optionally attached to a हेतु। Occasional usages like धूमात् &c. where धूम though not a गुण takes पञ्चमी, and नास्ति &c. where अनुपलब्धि, though in the feminine, takes पञ्चमी may then be defended.

मित—। योगस्य विभागः विच्छेदः योगविभागः। 'विभाषा' इति 'गुणेऽस्त्रियाम्' इत्यनेन सह युक्तं दृश्यते। यद्ययं योगश्छिद्यते तदा 'विभाषा' इत्येवैकं सूत्रं जायते, 'गुणेऽस्त्रियाम्' इत्यन्यत्। उभयत्र 'हेतौ' इति 'पञ्चमी' इति च अनुवृत्तम्। आद्यात् 'हेतौ पञ्चमी विभाषा' इत्यर्थो लभ्यते। तेन 'धूमात्' इत्यगुणे 'उपलब्धेः' इति स्त्रियाञ्च पञ्चमी समर्थिता भवति। एष तु भाष्ये योगविभागो न दृश्यते तत् अभियुक्तप्रयोगसमर्थनार्थमेव कर्त्तव्यो न तु सर्वत्रानुसर्त्तव्यः॥

**६०३। पृथग्विनानानाभिस्तृतीयान्यतरस्याम्॥ २।३।३२॥**

**दी—। एभिर्योगे तृतीया स्यात् पञ्चमीद्वितीये च। अन्यतरस्यां-**

ग्रहणं समुच्चयार्थम्। पञ्चमीद्वितीये चानुवर्त्तेते। पृथक् रामेण रामात् रामं वा। एवं विना नाना।

In connection with पृथक् &c. द्वितीया, तृतीया and पञ्चमी are attached. अन्यतरस्याम् is added to include what follows from preceding rules, and पञ्चमी and द्वितीया are following. Thus पृथक् &c. Similarly from विना and नाना।

मित—। भाष्ये द्वितीयासमुच्चयो न दृश्यते। युक्तश्चैतत्। "षष्ठ्यतसर्थ—" (६०९—२।३।३०) इति "एनपा—" (६१०—२।३।३१) इति च प्रासङ्गिकमेव अतिप्रसङ्गवारणाय कृतं न प्रधानम्। तेन षष्ठ्याः द्वितीयाया वा अनुवृत्तिर्नास्ति। द्वितीयार्थं "ततोऽन्यत्रापि दृश्यते" (५४४, वा) इति समाश्रयिष्यते। वृत्तिकारस्तु तदर्थं "पृथग्विनानानाभिः" इति योगं विभजते। पूर्वसूत्रात् 'द्वितीया' इत्यनुवर्त्तयति च॥

## ६०४। करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य॥ २।३।३३॥

दी—। एभ्यः अद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ स्तः। स्तोकेन स्तोकाद्वा मुक्तः। द्रव्ये तु—स्तोकेन विषेण हतः।

स्तोक, अल्प, कृच्छ्र and कतिपय take तृतीया and पञ्चमी where they are used as करण and do not refer to concrete substances. Thus स्तोकेन &c.—escaped easily, or narrowly. If the reference is to a substance, then स्तोकेन etc, killed with a very small amount of poison, where तृतीया alone is available as the proper करणविभक्ति।

मित—। 'कतिपयस्य' इति पञ्चम्यर्थे षष्ठी, तदाह 'एभ्यः' इति। यदा तु धर्ममात्रं करणत्वेन विवक्षितं न द्रव्यम्, तदा स्तोकादीनामसत्त्ववचनता, तदाह 'अद्रव्यवचनेभ्यः'। स्तोकेन मुक्त इति स्तोकत्वगुणमात्रं विवक्षितम्, न स्तोकत्ववत् द्रव्यं किञ्चित् यथा स्तोकेन विषेण इत्यत्र।

६०५। दूरान्तिकार्थेभ्यो द्वितीया च ॥ २।३।३५ ॥

दी—। एभ्यो द्वितीया स्यात्। चात् पञ्चमीतृतीये च। प्रातिपदिकार्थमात्रे विधिरयम्। ग्रामस्य दूरं-दूरात्-दूरेण वा, अन्तिकम्-अन्तिकात्-अन्तिकेन वा। असत्त्ववचनस्य इत्यनुवृत्तेर्नेह—दूरः पन्थाः।

Words meaning 'far' and 'near' take द्वितीया। The च in the rule attaches पञ्चमी and तृतीया also. These are to indicate the sense of the प्रातिपदिक only. Thus ग्रामस्य &c. The word असत्त्ववचनस्य attaches itself to this rule also; hence, दूरः पन्थाः without द्वितीया &c. because दूर refers to the concrete object पथिन्।

मित—। इह उदाहृतविषये द्वितीयादिभिः प्रातिपदिकार्थमात्रमुच्यते इत्याशयः। तेनात्र प्रथमाया अपवादः। सर्वत्र प्रातिपदिकार्थमात्रे एव एता विभक्तय इति तु न। "दूरादावसथान्मूत्रम्" इति भाष्ये उदाहृतम्। तेन अधिकरणेऽपि भवन्ति। आवसथात् दूरे मूत्रं त्यजेदिति तस्यार्थः। दूरः पन्थाः इति दूरत्वधर्मी द्रव्ये वर्त्तते, तेन न द्वितीयादयः॥

---

सुबर्थप्रकरणे—षष्ठी।

६०६। षष्ठी शेषे ॥ २।३।५० ॥

दी—। कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषः। तत्र षष्ठी स्यात्। राज्ञः पुरुषः।

शेष is 'Other than what is said', 'what remains to discuss' &c. The Karakas and the sense of a Pratipadika have been discussed. Hence such relations as that of the possessor and

the possessed yet remain to speak of. These relations will be expressed by the षष्ठी विभक्ति। Thus राज्ञः &c.

मित—। 'शेषे' अवशिष्टे, उक्तादन्येषु सम्बन्धेषु वाच्येषु सत्सु इत्यर्थः, षष्ठी विभक्तिः स्यात्। वाक्येषु प्रातिपदिकं नाम स्वार्थे वा अर्थान्तरयोगे वा प्रयुज्यते। स्वार्थे चेत्, प्रातिपदिकार्थमात्रे प्रथमा इत्युक्तं प्राक्। अर्थान्तरयोगश्च धातुना द्वारेण भवेत् प्रातिपदिकेन वा। धात्वर्थयोगे कर्मादिषु द्वितीयादयोऽपि उक्ता एव। प्रातिपदिकार्थयोगस्तु अनुक्तः शिष्यते। तत् प्रातिपदिकार्थयोः सम्बन्धः स्वस्वामिभावादिः स शेषः। तस्मिन् द्योत्ये षष्ठी स्यात्। राज्ञः पुरुषः इत्यत्र राजा स्वामी पुरुषः स्वम्, स च सम्बन्धः 'राज्ञः' इति षष्ठ्या उक्तः॥ अथ कथं तदर्थे राजन्शब्दादेव षष्ठी न पुरुषशब्दात् न वोभाभ्याम्? उच्यते—'पुरुषः' इति प्रतिस्वामि भिद्यते, राजस्वामिकः पुरुषः, अमात्यस्वामिकः पुरुषः, नगरपाल-स्वामिकः पुरुषः इति। अपि च एक एव पुरुषः ह्यः नगरपालस्य कर्मकरः, अद्य अमात्यस्य, श्वः पुनः राज्ञः स्यात्। तत् भेद एष स्वामिकृतो न पुरुषकृतः। दृश्यते च, तदेव हिरण्मयविकारि कदाचित् देवदत्तस्य कालान्तरे च विष्णुमित्रस्य भूत्वा स्वामिभेदात् भिन्नत्वेन व्यपदिश्यते। तेन हि स्वं विशेष्यं प्रधानम्, स्वामी विशेषण-मप्रधानमित्येव युक्तम्। किञ्च न हि विशेष्यं स्वयमात्मनः प्रकारं वक्ति अहमीदृशः अहं तादृश इति। तत्तु विशेष्यस्यार्थे विशेषणेन क्रियते। तदेव तस्य विशेषणता यदसौ विशेष्यं विशेषयतीति। लोकेऽपि न हि प्रधानं स्वयमाघोषयति अमुकोऽहमागत इति, प्रधानान्वितेन अप्रधानेन हि तत् क्रियते। एवमिहापि स्वस्वामिभावो विशेषणेनैव राज्ञा आख्यास्यते न विशेष्येण पुरुषेण। पुरुषे तु प्रातिपदिकार्थमात्रे प्रथमा, यश्च षष्ठ्यर्थसम्बन्धोऽत्राधिकोऽवभासते वाक्यार्थः किल सः॥

दी। कर्मादीनामपि सम्बन्धमात्रविवक्षया षष्ठी एव। सतां गतम्। सर्पिषो जानीते। मातुः स्मरति। एधो दकस्योपस्कुरुते। भजे शम्भो-श्चरणयोः। फलानां तृप्तः।

Even when कर्म &c. are thought of as merely related to the क्रिया, and not as having the specific relation that gives them

their कर्मत्व &c., they are treated as शेष and take षष्ठी। Thus सतां—the way of the good, सर्पिषः &c.—induced by Ghi, मातुः etc.—thinks of his mother, एधो &c.—fuel heats water, भजे &c.—I worship the feet of Sambhu, फलानाम् &c.—had enough of fruits.

मित—। इह सम्बन्धः क्रियायोगः। यदा कर्मादीनां क्रियया योगमात्रं विवक्ष्यते, योगस्य प्रकारः—ईप्सिततमरूपेण अन्यथा वा—नाभिधीयते,तदा ते कर्मादिसंज्ञां द्वितीयादिविभक्तिञ्च नैव लभन्ते। कारकत्वं तु तेषां नापयाति। न हि वक्तृविशेषविवक्षया नीलस्य नीलत्वं हीयते। त इमे कारकशेषाः॥ सतां गतमित्यत्र सन्तो गच्छन्तीति प्रतीतिः—कर्तृशेषः॥ सर्पिषो जानीते इति सर्पिषा करणेन प्रवर्त्तते इत्यर्थः—करणशेषः॥ मातुः स्मरति इति कर्मशेषः॥ 'एध' इत्यदन्तः पुंसि। यद्वा सान्तः क्लीबे। दकमित्युदकार्थे। उपस्करणं गुणान्तराधानम् उष्णतासमर्पणम्—कर्मशेषः॥ भजे इत्यत्र चरणयोः पूजोपहारप्रदानप्रतीतिः—सम्प्रदानशेषः। यद्वा चरणौ भजे इति कर्मशेषः॥ फलानां तृप्त इति फलैस्तृप्तिः प्रतीयते—करणशेषः॥ "अकथितञ्च" (५३९—१।४।५१) इति तु नेह प्रवर्त्तते। तत्र हि परिगणनं कृतं, न चैते धातवः परिगणिताः। तेन "नटस्य गाथां शृणोति" इतिवत् इह कारकत्वेऽपि शेषत्वं भवति॥

## ६०७। षष्ठी हेतुप्रयोगे॥ २।३।२६॥

दी—। हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात्। अन्नस्य हेतोर्वसति।

The हेतु takes षष्ठी when the word हेतु is actually used and the relation of cause and effect is implied. Thus अन्नस्य &c. where अन्न the हेतु takes षष्ठी instead of तृतीया।

मित—। 'हेतौ' इत्यनुवर्त्तते। वाक्ये हेतुशब्दस्य चेत् प्रयोगः, हेतुवाचके शब्दे षष्ठी स्यात्। तृतीयापवादः। सा च षष्ठी हेतौ द्योत्ये हेतुहेतुमद्भावे गम्ये एव भवति। उदाहरणे अन्नं वासहेतुः। तेन अन्नस्य इति षष्ठी। 'हेतोः' इति षष्ठी

तु 'अन्नस्य' इत्यनेन समानाधिकरणत्वात्। 'हेतौ द्योत्ये' किम्? अन्नं हेतुर्वासस्य। इह हेतुः स्फुटमुक्तः अन्नमिति, न द्योत्यः। तेन न षष्ठी॥

## ६०८। सर्वनाम्नस्तृतीया च॥ २।३।२७॥

दी—। सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च। केन हेतुना वसति। कस्य हेतोः।

A सर्वनाम takes तृतीया also, if it stands for a हेतु and the word हेतु is actually used in the sentence, the relation of cause and effect being implied. Thus केन &c.

मित—। 'हेतुप्रयोगे' इत्यनुवर्त्तते। 'सर्वनाम्नः हेतुप्रयोगे तृतीया च' इत्यन्वयः। तत्र 'सर्वनाम्नः हेतुप्रयोगे' इत्यस्य व्याख्यानं 'सर्वनाम्नो हेतुशब्दस्य च प्रयोगे' इति॥ एतच्च प्राचामनुरोधात्। ते तु 'हेतु'-शब्दात् षष्ठीतृतीये न स्तः इत्याशङ्क्य इह 'सर्वनाम्नः' इति षष्ठीं कल्पयन्ति पञ्चमीं नानुमोदन्ते। क्लिष्टं पुनरेतद्व्याख्यानं प्रतिभाति। 'सर्वनाम्नो हेतुशब्दस्य च प्रयोगे' इत्यर्थे समासेन 'सर्वनाम्नो हेतुप्रयोगे' इति दुर्लभम्। कुतः? 'सर्वनाम्नो हेतुशब्दस्य च' इत्यत्र चार्थयोगात् आद्यौ शब्दौ द्वन्द्वाङ्गतया परस्परसापेक्षौ। तत् द्वयोरेव 'सर्वनाम्नः' 'हेतोः' इत्येतयोः 'प्रयोगे' इत्यनेन वृत्तिरस्तु, मास्तु वा, न त्वनयोरेकतरस्य। वस्तुतस्तु 'सर्वनाम्नो हेतोश्च प्रयोगे' इत्येतत् द्वन्द्वगर्भस्य षष्ठीतत्पुरुषस्य वाक्यं, 'प्रयोगे' इति च द्वन्द्वसमुदायेन समर्थः, न पुनरेकतरेण 'हेतोः' इति द्वन्द्वाङ्गेन। 'सर्वनामहेतुप्रयोगे' इति साधु स्यात्, न तु 'सर्वनाम्नो हेतुप्रयोगे' इति। असाधुत्वे कारणं प्रागुक्तम्—चार्थपरित्यागः, असामर्थ्ये सामर्थ्याध्यवसानञ्च॥ तत् किं वा सुधियो मन्यन्ते यद्येवं व्याख्यायते?—"हेतौ" (५९८—२।३।२३) इत्यतः 'हेतौ' इत्यनुवर्त्तते। तेन "अकर्त्तर्यृणे पञ्चमी" (६०१—२।३।२४) इत्यस्य 'ऋणे हेतौ पञ्चमी' इत्यर्थः, "विभाषा गुणेऽस्त्रियाम्" (६०२—२।३।२५) इत्यस्य 'गुणे हेतौ विभाषा' इत्यर्थः, "षष्ठी हेतुप्रयोगे" (६०७—२।३।२६) इत्यस्य 'हेतुप्रयोगे हेतौ षष्ठी' इत्यर्थः सम्पद्यते। अतः परं 'हेतुप्रयोगे' इत्यप्यनुवर्त्तते 'हेतौ' इति च पञ्चम्या विपरिणम्यते। तेन "सर्वनाम्नस्तृतीया च" इत्यत्र 'हेतुप्रयोगे हेतोः सर्वनाम्नः तृतीया

च' इत्यन्वयः। अर्थश्च 'हेतुशब्दस्य प्रयोगे हेतुर्यत् सर्वनाम तस्मात् तृतीया भवति षष्ठी च' इति। केन हेतुना, कस्य हेतोः इत्यादिषु 'केन कस्य' इत्यादि विशेष्यम्। 'हेतुना हेतोः' इत्यादि विशेषणम्। समानाधिकरणतया एकैव विभक्तिरुभयोः॥ इति॥

दी—। "निमित्तपर्य्यायप्रयोगे सर्वासां प्रायदर्शनम्" ( वार्त्तिक )। **किं निमित्तं वसति, केन निमित्तेन, कस्मै निमित्ताय, इत्यादि। एवं किं कारणम्, को हेतुः, किं प्रयोजनम्, इत्यादि। प्रायग्रहणात् असर्वनाम्नः प्रथमा द्वितीये न स्तः। ज्ञानेन निमित्तेन हरिः सेव्यः। ज्ञानाय निमित्ताय इत्यादि।**

All case-affixes are generally seen in a हेतु when a word meaning निमित्त, cause, is actually used. Thus किं etc. Here 'generally' implies that प्रथमा and द्वितीया are not used if the word is not a सर्वनाम। Thus ज्ञानेन &c.

मित—। 'निमित्तपर्य्यायस्य' निमित्तार्थकशब्दस्य 'प्रयोगे प्रायेण सर्वासां विभक्तीनां दर्शनं' भवति, हेतुवाचकशब्दात् इति शेषः। किं निमित्तमिति प्रथमाया द्वितीयायाश्च उदाहरणम्। एतत्तु भाष्यकारेण "हेतौ" ( ५६८—२।३।२३ ) इत्यत्र पठितं "षष्ठी हेतुप्रयोगे" "सर्वनाम्नस्तृतीया च" इति सूत्रद्वयञ्च उपेक्षितम्॥

## ६०९। षष्ठ्यतसर्थप्रत्ययेन॥ २।३।३०॥

दी—। **एतद्योगे षष्ठी स्यात्।** "—दिक्शब्द—" ( ५९५—२।३।२९ ) **इति पञ्चम्या अपवादः। ग्रामस्य दक्षिणतः, पुरः, पुरस्तात्, उपरि, उपरिष्टात्॥**

षष्ठी is the विभक्ति in connection with affixes having the sense of अतसुच्। This bars the पञ्चमी expected in connection with a दिक्शब्द। Thus ग्रामस्य &c.—to the south &c. of the village.

मित—। 'अतस्' इति अतसर्थे लक्षणा। अतस् अर्थः अस्य अतसर्थः। तथा-विधेन प्रत्ययेन। तदन्तेन इत्यर्थः। अतसुच्, असि, रिल्, रिष्टातिल् इत्यादयः प्रत्यया

अस्तातेरर्थे विधीयन्ते। अस्तातिश्च "दिक्शब्देभ्यः—" (१९७४—५।३।२७) स्वार्थे भवति। तेन एतदन्ता अपि दिक्शब्दा एव। ततः पञ्चम्यां प्राप्तायां षष्ठी॥

## ६१०। एनपा द्वितीया २।३।३१॥

दी—। एनबन्तेन योगे द्वितीया स्यात्। 'एनपा' इति योगविभागात् षष्ठी अपि। दक्षिणेन ग्रामं ग्रामस्य वा।

द्वितीया is the विभक्ति in connection with words that have एनप् affixed to them. If the word एनपा be separated from its connection here and read as an independent rule, षष्ठी too becomes available. Thus दक्षिणेन &c.—immediately to the south of the village.

मित—। योगविभागेन 'एनपा' इत्येकं सूत्रं 'द्वितीया' इत्यन्यत्। पूर्वसूत्रादनुवृत्ता षष्ठी। ततः 'षष्ठी एनपा' इति लभ्यते। 'एनपा' इत्यनुवृत्तौ 'एनपा द्वितीया' इति च। "एनबन्यतरस्याम्—" (१९८४—५।३।३५) इत्येनप्।

## ६११। दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्॥ २।३।३४॥

दी—। एतैर्योगे षष्ठी स्यात् पञ्चमी च। दूरं निकटं ग्रामस्य ग्रामाद्वा।

In connection with words meaning 'far' or 'near' षष्ठी and पञ्चमी are affixed. Thus दूरं &c.

## ६१२। ज्ञोऽविदर्थस्य करणे॥ २।३।५१॥

दी—। जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात्। सर्पिषो ज्ञानम्।

When ज्ञा does not mean 'to know' its करण takes षष्ठी if it is treated as शेष and not recognised as करण। Thus सर्पिषो &c.—inducement to work caused by *Ghi*. Here ज्ञा does not refer

to the knowledge of Ghi, but to the *inclination* to work cansed by that knowledge.

मित—। ज्ञा ज्ञाने क्र्यादिः। ज्ञाशब्दस्य षष्ठ्यां ज्ञः, ज्ञाधातोरित्यर्थः। विद ज्ञाने अदादिः। ततः क्विपि वित् ज्ञानम्। वित् अर्थः अस्य विदर्थः ज्ञानार्थः। तथा न भवतीति तस्य। ज्ञाधातुर्यदा ज्ञानार्थं हित्वा ज्ञानपूर्विकायां प्रवृत्तौ वर्त्तते तदा तस्य करणे शेषे षष्ठी स्यात्। शेषे इति पूर्वसूत्रादनुवर्त्तते। उदाहरणे 'ज्ञानं' प्रवृत्तिः। प्रथमं सर्पिरिति ज्ञानं ततस्तत्करणिका प्रवृत्तिरित्यर्थः॥ ननु यदि शेषविवक्षा करणस्य, तर्हि "षष्ठी शेषे" (६०६—२।३।५०) इत्येव सिद्धा षष्ठी किमियता सूत्रेण? सत्यं, नियमार्थमेतद्भविष्यति। षष्ठी एव न लुक्। एवं सर्पिषो ज्ञानं सर्पिर्ज्ञानमिति समासो न। उक्तञ्च "प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये" इति॥

## ६१३। अधीगर्थदयेशां कर्मणि॥ २।३।५२॥

**दी—। एषां कर्मणि शेषे षष्ठी स्यात्। मातुः स्मरणम्। सर्पिषो दयनमीशनं वा।**

Of दय 'to give' &c., ईश 'to lord over' and of roots meaning 'to remember' the कर्म takes षष्ठी if regarded as शेष only. Thus मातुः &c.—mother's memory, सर्पिषः &c.—Gift of Ghi or control over Ghi.

मित—। इक् स्मरणे। अधिपूर्व एव प्रयुज्यते। अधीगर्थः स्मृत्यर्थः। दय दानादिषु। ईश ऐश्वर्य्ये। शेषे इति वर्त्तते। कर्मणि शेषे शेषत्वेन विवक्षिते॥ प्राग्वन्नियमार्थं वचनं, षष्ठी श्रूयत एव न लुप्यते इति। अतो न समासः। कथं तर्हि "हरिस्मृतिः सर्वविपद्विनाशिनी" इति? हरेः स्मृतिरिति कर्मणि कृद्योगा षष्ठी न हि शेषे षष्ठी। ततः समासः। एतेन "लोकेश चैतन्यमयादिदेव" इत्यादयोऽपि व्याख्याताः।

## ६१४। कृञः प्रतियत्ने॥ २।३।५३॥

**दी—। प्रतियत्नो गुणाधानम्। कृञः कर्मणि शेषे षष्ठी स्याद्गुणाधाने। एधो दकस्योपस्करणम्।**

प्रतियत्न is imparting a virtue. The कर्म of कृ, when regarded as शेष only, takes षष्ठी if the imparting of some virtue is implied. Thus एधो &c.

मित—। एधः इति पृथक् पदम्। दक इत्युदकार्थे इत्याद्युक्तं प्राक्। "उपात् प्रतियत्न—" (२५५२—६।१।१३९) इति सुटि उपस्करणं गुणाधानम्। प्राग्वत् इहापि शेषे षष्ठी न समस्यते।

## ६१५। रुजार्थानां भाववचनानामज्वरेः ॥ २।३।५४ ॥

**दी—। भावकर्त्तृकाणां रुजार्थानां कर्मणि शेषे षष्ठी स्यात्। चौरस्य रोगस्य रुजा।**

Of roots meaning 'to pain', excepting ज्वरि, the कर्म, if regarded as शेष only, takes षष्ठी, the कर्त्ता being denoted by some word with an affix in the भाववाच्य। Thus चौरस्य &c.—the thief's suffering caused by disease. Here रोग, with घञ् in the भाववाच्य, is the कर्त्ता and has षष्ठी owing to the कृत् in रुजा, while चौर, the कर्म, is regarded as शेष and takes शेषे षष्ठी।

मित—। 'भाव' इति भावप्रत्ययान्तशब्दः। वक्तीति वचनः कर्त्ता इत्यर्थः। बाहुलकात् कर्त्तरि ल्युट्। भावो वचनः कर्त्ता एषामित्यर्थः। तदाह 'भावकर्त्तृकाणाम्' इति। रुजो भङ्गे इत्यस्माद्भिदादेराकृतिगणत्वादङि रुजा रोगः। सः अर्थ एषाम्॥ चौरं रुजति रोगः इत्यर्थे चौरस्य इति कर्मणि शेषे षष्ठी, रोगस्येति कर्त्तरि कृद्योगा॥

**दी—। "अज्वरिसन्ताप्योरिति वाच्यम्" (वार्त्तिक)॥ रोगस्य चौरज्वरः चौरसन्तापो वा। रोगकर्त्तृकं चौरसम्बन्धि ज्वरादिकमित्यर्थः।**

Exception should be made of both ज्वरि and सन्तापि। Thus रोगस्य &c. the meaning being that the fever &c. pertain to the thief and are caused by disease.

मित—। ज्वरिः सन्तापिश्च कर्मणि यथाप्राप्तं शेषे षष्ठी भवति न पुनर्नियस्यते। तेन चौरज्वरः इत्यादिः कर्मणि शेषषष्ठ्या अपि समासो भवत्येव॥

६१६। आशिषि नाथः २।३।५५॥

दी—। आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात्। सर्पिषो नाथनम्। 'आशिषि' इति किम्? माणवकनाथनम्, तत्सम्बन्धिनी याच्ञा इत्यर्थः।

When नाथ means 'to hope for' its कर्म, if regarded as शेष, takes षष्ठी। Thus सर्पिषो &c.—hope for a supply of Ghi. Why say आशिषि? Witness माणवक &c. which means entreaty of a mannikin and allows समास।

मित—। नाथ याच्ञोपतापैश्वर्य्याशीःषु। तत्र आशिषि आत्मनेपदम्, (२६८७, वा)। सर्पिर्नाथनम् इति शेषषष्ठ्या समासो न॥ आशिषि एव नियमः अन्यार्थे तु स्यात्—माणवकनाथनम्।

६१७। जासिनिप्रहणनाटक्राथपिषां हिंसायाम्॥ २।३।५६॥

दी—। हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात्। चौरस्योज्जासनम्। निप्रौ संहतौ विपर्य्यस्तौ व्यस्तौ वा। चौरस्य निप्रहणनं प्रणिहननं निहननं प्रहणनं वा। नट अवस्यन्दने चुरादिः। चौरस्योन्नाटनम्। चौरस्य क्राथनम्। वृषलस्य पेषणम्। हिंसायां किम्? धानापेषणम्।

Of the roots जस, निप्रहण, नट, क्राथ and पिष implying 'molestation' the कर्म, if regarded as शेष, takes षष्ठी। Thus चौरस्य &c. नि and प्र may be taken in this or the reverse order, or again separately. Thus चौरस्य &c. नट 'to dance' is of the चुरादि class. Thus चौरस्य &c. Why say हिंसायाम्? Witness धानापेषणम्—

pounding of rice—which implies no हिंसा and thus admits of a षष्ठीसमास with शेषे षष्ठी।

मित—। जासि इति स्वार्थिकणिच्, जसु हिंसायां चुरादिः॥ निप्रपूर्वौ हनः निप्रहणः। "हन्तेरत्पूर्वस्य" (३५९—८।४।२२) इति णत्वम्॥ अवस्कन्दने इति क्वचित् पाठः। अवस्यन्दनं नृत्यम्। उत्पूर्वस्तु हिंसायामिति माधवः। नाट इति दीर्घनिर्देशात् नट नृत्तौ इति घटादेस्तु न ग्रहणम्॥ क्रथ हिंसार्थौ घटादिः, निपातनात् वृद्धिः॥ धाना इति भ्रष्टव्रीहियवादिशस्यम्। धानापेषणमिति हिंसाया अभावात् नियमो न, शेषषष्ठ्या समासः।

## ६१८। व्यवहृपणोः समर्थयोः॥ २।३।५७॥

दी—। शेषे कर्मणि षष्ठी स्यात्। द्यूते क्रयविक्रयव्यवहारे च अनयोस्तुल्यार्थता। शतस्य व्यवहरणं पणनं वा। समर्थयोः किम्? शलाकाव्यवहारः, गणना इत्यर्थः। ब्राह्मणपणनं, स्तुतिरित्यर्थः।

Of the roots व्यवहृ and पण in the senses common to them, the कर्म, it regarded as शेष, takes षष्ठी। 'Gambling with dice' and 'Trading' are the senses common to them. Thus शतस्य &c. Why say समर्थयोः—having the same meaning? Witness शलाकाव्यवहारः, which means 'counting', and ब्राह्मणपणनम् which means 'laudation' so do not come under the restriction and admits of a षष्ठीसमास with शेषे षष्ठी।

मित—। समर्थयते इति समर्थः एकार्थकः, पचाद्यच्। वृत्तौ संशब्दस्य तुल्यार्थता इति हरदत्तः। यद्वा समः अर्थः अनयोः समर्थौ, शकन्ध्वादिः॥

## ६१९। दिवस्तदर्थस्य॥ २।३।५८॥

दी—। द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात्। शतस्य दीव्यति। 'तदर्थस्य' किम्? ब्राह्मणं दीव्यति स्तौतीत्यर्थः।

Of दिव् meaning 'to trade' or 'to gamble with dice' the कर्म takes षष्ठी। Thus शतस्य &c.—stakes a hundred. Why तदर्थस्य? Witness ब्राह्मणं दीव्यति which means belauds etc.

मित—। स पूर्वसूत्रोक्तः अर्थः अस्य तदर्थः द्यूताद्यर्थक इत्यर्थः। तस्य॥ कथं तर्हि पूर्वसूत्रे एव दिविर्नोक्तः? शेषे इत्यस्य असम्बन्धार्थं दिवेः पृथग्विधिः। असमासप्रसङ्गो नास्तीति दर्शयितुं तिङन्तेन उदाहरति। द्वितीयापवादः षष्ठी। शतदेवनमिति कर्मषष्ठ्या शेषषष्ठ्या वा समासः॥

## ६२०। विभाषोपसर्गे॥ २।३।५९॥

दी—। पूर्वयोगापवादः। शतस्य शतं वा प्रतिदीव्यति।

If an उपसर्ग precedes, the कर्म of दिव takes षष्ठी optionally. Thus शतस्य etc.

मित—। उपसर्गे सति तदर्थस्य दिवः कर्मणि विभाषा षष्ठी स्यात्। इह षष्ठ्या मुक्ते द्वितीया भवति। शेषे इति न सम्बध्यते, पूर्वेण तुल्यविषयत्वात्॥

## ६२१। प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने॥ २।३।६१॥

दी—। देवतासम्प्रदानके अर्थे वर्त्तमानयोः प्रेष्यब्रुवोः कर्मणो हविषो वाचकात् शब्दात् षष्ठी स्यात्। अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा।

Of the roots प्रेष 'to despatch' and ब्रू 'to speak out' the कर्म, if it is a sacrificial offering, takes षष्ठी when the सम्प्रदान is a god. Thus अग्नये छागस्य प्रेष्य, अग्नये छागस्य अनुब्रूहि etc.—Despatch the goat unto Agni, Dedicate the goat unto Agni etc.

मित—। 'प्रेष्य' इति श्यना निर्देशात् इष गतौ दिवादिर्गृह्यते। प्रेष्यश्च ब्रूश्च प्रेष्यब्रुवौ, तयोः। हविष इति पञ्चमी। हविर्वाचकात् शब्दादित्यर्थः॥ इह शेषे इति निवृत्तम्, कर्मणि इत्यनुवर्त्तते पञ्चम्या च विपरिणम्यते। देवता सम्प्रदाने

यस्मिन् तस्मिन् विषये। प्रेष्यब्रुवोः कर्मणो हविषः षष्ठी स्यात् देवतासम्प्रदाने विषये इत्यन्वयः। द्रव्यात् प्रत्ययोत्पत्तिरसम्भवा, तत् हविषः षष्ठी इति 'हविषो वाचकात् शब्दात् षष्ठी' इत्यर्थः। एतदेवाह—'देवता सम्प्रदानं' यस्मिन् तथाविधे 'अर्थे' विषये 'वर्त्तमानयोः प्रेष्यब्रुवोः' धात्वोः 'कर्मणः' कर्मीभूतस्य 'हविषो वाचकात् शब्दात्' इत्यादि। अग्नये हविषः प्रेष्य, हविः प्रेरय, प्रदेहि इत्यर्थः॥ इह वृत्तौ प्रत्युदाहरणे "प्रेष्यब्रुवोरिति किम्? अग्नये छागं हविर्वपां मेदो जुहुधि" इत्युक्तम्। प्रस्थितशब्द-प्रयोगेऽपि वृत्तौ भाष्ये च "इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य" इत्येवो-दाहरणम्। उभयत्र छागशब्दे कर्मविभक्तिः प्रदर्शिता। तत् छागोऽपि हविरेव इति भाष्याशयः, तदनुयायिनी च वृत्तिः। नव्यास्तु छागो न हविरिति मत्वा 'छागस्य' इति शेषे षष्ठीमाहुः। छागस्य यत् हविः या वपा यत् मेदः तस्य प्रेष्य इति तेषामन्वयः। एतद्भाष्यविरुद्धम्। शेषषष्ठ्यां सत्याम् उदारणप्रत्युदाहरणयोः 'छागम्' इत्यसङ्गता द्वितीया। तत् भाष्यञ्चेत् प्रमाणम् उपेक्ष्या एव नव्याः॥ यच्च छागविकारश्छागः इति विशेषण-मुक्तं न्यासकृता तदपि चिन्त्यम्। उदाहरणे अप्रसङ्गः खलु विशेषणस्य॥ उदा-हरणे प्रेष्य इति लोटि मध्यमपुरुषैकवचने रूपम्। सूत्रस्थः प्रेष्यशब्दः अनेन सरूपः इति इषधातोरिह लोण्मध्यमपुरुषैकवचनमेव विषयः, साहचर्य्यात् ब्रूधातोरपि तदेव इत्याहुः॥

## ६२२। कृत्वोऽर्थप्रयोगे कालेऽधिकरणे॥ २।३।६४॥

**दी—। कृत्वोऽर्थानां प्रयोगे कालवाचिनि अधिकरणे शेषे षष्ठी स्यात्। पञ्चकृत्वः अह्नो भोजनम्। द्विरह्नो भोजनम्। शेषे किम्? द्विरहन्यध्य-यनम्।**

In connection with affixes having the sense of कृत्वसुच्, the अधिकरण, if a काल and if regarded as शेष, will take षष्ठी। Thus पञ्च etc.—five meals a day. Why शेषे? Witness द्विरहनि etc. which has the usual सप्तमी in the अधिकरण, there being no शेषविवक्षा।

मित—। 'कृत्वस्' इति कृत्वसुच्प्रत्ययस्यार्थे लक्षणया। कृत्वः अर्थः एषाम् कृत्वोऽर्थाः। तेषाम्। "संख्यायाः क्रियाभ्यावृत्ति—" ( २०८५—५।४।१७ ) इति कृत्व-सुच्। "द्वित्रिचतुर्भ्यः सुच्" ( २०८६—५।४।१८ ) इति सुच्। एतावित्त विषयः। शेषे इत्यस्ति। अत्रापि अह्नर्भोजनम् इति समासनिवृत्तये वचनम्॥

## ६२३। कर्त्तृकर्मणोः कृति॥ २।३।६५॥

दी—। कृद्योगे कर्त्तरि कर्मणि च षष्ठी स्यात्। कृष्णस्य कृतिः। जगतः कर्त्ता कृष्णः।

In connection with a कृत्, undeclared कर्त्ता and कर्म take षष्ठी। Thus कृष्णस्य etc.—Krishna's work—where कृष्ण is the कर्त्ता and is in the षष्ठी। Also जगतः etc.—Krishna is the creator of the universe—where जगत् is the कर्म and takes षष्ठी।

मित—। अनभिहिते इत्यस्ति। कृति प्रयुक्ते तेनैव कृता युक्तो यः कर्त्ता यत् कर्म अनभिहितं, तत्र षष्ठी इत्यर्थः। शेषे इति निवृत्तम्। अनुक्ते कर्त्तरि—भावे तिङि, कृष्णेन चक्रे ; भावे कृति, कृष्णस्य कृतिः। तृतीयापवादः षष्ठी। अनुक्ते कर्मणि—कर्त्तरि तिङि, जगत् चकार कृष्णः ; कर्त्तरि कृति, जगतः कर्त्ता कृष्णः द्वितीयापवादः षष्ठी॥

दी—। "गुणकर्मणि वेष्यते" ( वार्त्तिक )। नेता अश्वस्य स्रुघ्नस्य स्रुघ्नं वा।

The अप्रधान कर्म optionally takes षष्ठी in connection with कृत्। Thus नेता etc.

मित—। गुणकर्म इत्यप्रधानं कर्म। तत्र षष्ठी वा स्यात्। प्रधाने नित्या षष्ठी उदाहरणे अश्वः प्रधानं स्रुघ्नः अप्रधानं कर्म। पक्षे षष्ठ्या मुक्ते अनभिहिते कर्मणि द्वितीया।

दी—। कृति किम्? तद्धिते मा भूत्। कृतपूर्वी कटम्।

Why say 'कृति'—in connection with a कृत्? This is to show

that षष्ठी is not allowed in connection with a तद्धित। Witness कृतपूर्वी कटम्—He had made a mat before. Here कट the कर्म does not become कटस्य though undeclared.

मित—। इह क्रियायोगे हि कर्तृता कर्मता चोपजायते, तत् "कर्तृकर्मणोः" इत्येतावतैव क्रियायोगो गम्यते। क्रिया च धातौ तिङ्योगात् कृद्योगाच्च लभ्यते नान्यथा। ततस्तिङि च कृति च कर्तृकर्मणोः षष्ठी इत्यायाति। उत्तरत्र तु "न लोक—" (६२७—२।३।६९) इति तिङि निषिद्धा षष्ठी। तत् स्फुटोक्तिं विनापि कृति एव भविष्यति, किं कृद्ग्रहणेन? इति पृच्छति 'कृति किम्' इति। उत्तरमाह 'तद्धिते मा भूत्' इति। तद्धितेऽपि क्वचित् वृत्तौ क्रियाया अन्तर्भावो दृश्यते, यथा रथं वहति इत्यर्थे रथ्य इत्यत्र। तादृशे तद्धिते अनुक्ते कर्त्तरि कर्मणि वा षष्ठी मा भूत् एवमर्थं 'कृति' इत्याह॥ अत्रोदाहरणं कृतपूर्वी कटमिति। इह कर्मणः अविवक्षायां 'कृतमनेन' इति भावे क्तः। ततः 'पूर्वम्' इति क्रियाविशेषणयोगे 'कृतं पूर्वमनेन' इति सुप्सुपेति समासे "सपूर्वाच्च" (१८८७—५।२।८७) इति इनिप्रत्यये तद्धिते, कृतपूर्वी अयमिति कर्त्ता उच्यते। स च कर्मणि कस्मिंश्चित् सफलः इति सामान्यतो विज्ञायते। यदि कश्चित् विशेषविज्ञानार्थी कस्मिन् कर्मणि सफल इति पृच्छति, तदोत्तरं कटकरणे इति, यद्वा कटं कृतपूर्वी अयमिति। इह तद्धितः कर्त्तारमभिधत्ते न कर्म। क्तस्य कृतशब्दस्य: कटरूपेण कर्मणा सम्प्रति अभिसम्बन्धे जातेऽपि तद्धितान्तरितः कर्माभिधातुं न प्रभवति। एवं कर्मणि अनुक्ते षष्ठी प्रसज्यते, 'तद्धिते मा भूत्' इति निषेधात्तु न भवति। तत् 'कृतपूर्वी कटम्' इत्येव, न च 'कृतपूर्वी कटस्य' इति॥ कटः कृतः पूर्वमनेन इति विग्रहे तु कटशब्देन सम्बद्धः कृतशब्दः असामर्थ्यात् पूर्वशब्देन न समस्येत तद्धितोत्पत्तिश्च न स्यात्। तेन 'कटः कृतपूर्वी' इत्यपशब्द एव॥

## ६२४। उभयप्राप्तौ कर्मणि॥ २।३।६६॥

दी—। उभयोः प्राप्तिर्यस्मिन् कृति तत्र कर्मण्येव षष्ठी स्यात्। आश्चर्यो गवां दोहोऽगोपेन।

When षष्ठी is available in both कर्त्ता and कर्म in connection with a कृत्, the कर्म alone will have it. Thus आश्चर्यो &c. where दोह having भावे घञ्, both कर्त्ता and कर्म are अनुक्त and therefore eligible for षष्ठी ; but the कर्म, *i. e.*, गो, has it, the कर्त्ता taking तृतीया as usual.

मित—। 'उभयोः' कर्त्तरि कर्मणि च इत्यर्थः। 'प्राप्तिः' उपस्थितिः, षष्ठ्या इति शेषः। यो हि कृत् कर्त्तृकर्मणी विहाय अन्यत् किञ्चिदभिधत्ते, भावं वा कारकान्तरं वा, तत्र अनभिहिते कर्त्तरि तृतीयां कर्मणि च द्वितीयां बाधित्वा पूर्वसूत्रेण षष्ठी प्राप्नोति। सा च अनेन नियम्यते 'कर्मणि एव' षष्ठी, कर्त्तरि तु यथाप्राप्ता तृतीया॥ दोह इति भावे घञ्, कर्त्तृकर्मणी अनुक्ते। ततः कर्त्तरि तृतीया कर्मणि षष्ठी॥

**दी—। "स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः" (वार्त्तिक)। भेदिका बिभित्सा वा रुद्रस्य जगतः।**

The restriction that the कर्म alone takes षष्ठी does not exist in connection with अक and अ in the feminine. Thus भेदिका etc. —Rudra destroys or wants to destroy the universe.

मित—। स्त्रियां प्रत्ययः स्त्रीप्रत्ययः। स्त्रीप्रत्यययोरिति सप्तमी। अक इति ण्वुल्ण्वुचौ स्त्रियाम्। अकार इति "अ प्रत्ययात्" (३२७९—३।३।१०२) इति विहितः अप्रत्ययः। स्त्रियां यः अकप्रत्ययः अप्रत्ययश्च तयोर्योगे अयं नियमः, उभयप्राप्तौ कर्मण्येव इति नियमो, न स्यात्। तदा उभयोरेव कर्त्तृकर्मणोः षष्ठी इत्यर्थः॥

**दी—। "शेषे विभाषा" (वार्त्तिक)। स्त्रीप्रत्यये इत्येके—विचित्रा जगतः कृतिर्हरेः हरिणा वा। केचिदविशेषेण विभाषामिच्छन्ति—शब्दानामनुशासनमाचार्येण आचार्यस्य वा।**

In connection with other affixes, the restriction is optional. Here some say 'other' means 'other कृत् affixes in the *feminine.*'

Thus विचित्रा &c. Here कृतिः has क्तिन् in the feminine; the restriction is optional, so the कर्त्ता may take षष्ठी or the usual तृतीया। Others again take 'other' meaning '*any* other कृत् affix.' Thus शब्दानाम् etc. Here the affix in अनुशासनम् is ल्युट् in the neuter, yet the restriction is optional according to this view.

मित—। इह केचित् पूर्ववार्त्तिकात् 'स्त्रीप्रत्यययोः' इत्यनुवर्त्तयन्ति। ततो वचनविपरिणामेन 'शेषे स्त्रीप्रत्यये विभाषा' नियमः प्रवर्त्तते इति व्याचक्षते। अकाकारभिन्ने स्त्रीप्रत्यये अनुक्ते कर्मणि षष्ठी कर्त्तरि तु तृतीया च षष्ठी च इति तेषामाशयः। 'स्त्रीप्रत्यये' किम्? शब्दानामनुशासनमाचार्य्येण इति तृतीयैव॥ अन्ये पुनरिमामनुवृत्तिं नेच्छन्ति। ते हि "कर्तृकर्मणोः—" (६२३—२।३।६५) इत्यतः 'कृति' इत्यनुवर्त्त्य 'अविशेषेण' स्त्रीप्रत्ययरूपं विशेषमनादृत्यैव सामान्यतो वर्णयन्ति—'शेषे' अकाकारभिन्ने 'कृति' कृन्मात्रे 'विभाषा' नियमः॥

## ६२५। क्तस्य च वर्त्तमाने॥ २।३।६७॥

**दी—। वर्त्तमानार्थस्य क्तस्य प्रयोगे षष्ठी स्यात्। "न लोक—" (६२७—२।३।६९) इति निषेधस्यापवादः। राज्ञां मतो बुद्धः पूजितो वा।**

In connection with क्त in the present tense the undeclared कर्त्ता takes षष्ठी। This removes the prohibition "न लोक—" (627). Thus राज्ञां etc.—Approved, known or honoured by kings. In this the कर्त्ता is राज्ञाम् in the षष्ठी।

मित—। 'षष्ठी स्यात्' इत्यस्य 'अनुक्ते कर्त्तरि षष्ठी स्यात्' इत्यर्थः। "मतिबुद्धि—" (३०८९—३।२।१८८) इति वर्त्तमाने क्तो विहितः। क्तश्च कृत्। तत् "कर्तृकर्मणोः—" (६२३—२।३।६५) इत्येव सिध्यति किमर्थं पुनर्वचनम्? तदाह क्तप्रत्यययोगे "न लोक—" इति निषिद्धा षष्ठी, सा चेह पुनर्विधीयते। मत इत्यादिषु कर्मणि क्तः। उक्तं कर्म कर्त्ता अनुक्तः। अनेन च कर्त्तरि षष्ठी।

## ६२६। अधिकरणवाचिनश्च ॥ २।३।६८ ॥

दी—। क्तस्य योगे षष्ठी स्यात्। इदमेषामासितं शयितं गतं भुक्तं वा।

In connection with क्त declaring an अधिकरण, the undeclared कर्त्ता and कर्म take षष्ठी। Thus इदम् etc.—Here they sat, here they slept, this way they went, here they took their meals.

मित—। 'क्तस्य' इत्यनुवर्त्तते। "क्तोऽधिकरणे च—" (३०८७—३।४।७६) इति अधिकरणे विहितस्य क्तस्य इत्यर्थः। उदाहरणे एषामिति अनुक्ते कर्त्तरि षष्ठी। आस्यते अस्मिन्निति आसितं पीठमित्यर्थः। एवं शयितं शय्या, गतं मार्गः, भुक्तं भोजनपात्रम्। आसितशयितयोः धातोरकर्मकत्वात् कर्त्ता एव अनुक्तः, तत्रैव च षष्ठी। गतभुक्तयोस्तु कर्मणोऽपि विवक्षा सम्भवति, तदा तत्रापि षष्ठी—इदमेषां गतं ग्रामस्य, भुक्तमोदनस्य इति। "उभयप्राप्तौ—" ( ६२४—२।३।६६ ) इति नियमस्तु "कर्तृकर्मणोः—" ( ६२३—२।३।६५ ) इत्येतत् प्रति एव प्रवर्त्तते न उत्तरान् विधीन् प्रति। "पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्" ॥

## ६२७। न लोकाव्ययनिष्ठाखलर्थतृनाम् ॥ २।३।६९ ॥

दी—। एषां प्रयोगे षष्ठी न स्यात्। लादेशः—कुर्वन् कुर्वाणो वा सृष्टिं हरिः। उः—हरिं दिदृक्षुः, अलङ्करिष्णुर्वा। उकः—दैत्यान् घातुको हरिः।

In connection with a कृत् derived from लट्, लोट् etc., a कृत् ending in उ, the कृत् affix उकञ्, an indeclinable कृत्, affixes क्त and क्तवतु, affixes having the meaning of खल् and the affixes शानन्, चानश्, शतृ, तृन्, the undeclared कर्त्ता and कर्म do not take षष्ठी। Thus—( substitutes of लट् etc. ) कुर्वन् etc. the कर्म being सृष्टिम् not सृष्टेः ; ( उकारान्तकृत् ) हरिं etc. the कर्म appearing as हरिम् not हरेः ; ( उक )—दैत्यान् etc. not दैत्यानाम् etc.

मित—। "—क्तेि" ( ६२३—२।३।६५ ) इति प्राप्ता षष्ठी प्रतिषिध्यते। 'लोक' इत्यत्र ल उ उक इति च्छेदः। 'ल' इति दश लकाराः। तेषां क्तत्वात् प्राप्ते निषेधः। लकाराणां साक्षात् प्रयोगाभावादादेशमुदाहरति लादेश इति। शतृ, शानच्, कानच्, क्वसु इत्यादयो लादेशाः॥ उ इति इष्णुचोऽपि ग्रहणम्। इहोदाहरणेषु क्तः कर्त्तरि विहिता इति उक्तः कर्त्ता कर्म चानुक्तम्। तत्र अनुक्ते कर्मणि प्राप्तायाः षष्ठ्या निषेधात् द्वितीयैव॥ "कृदतिङ्" ( ३७४—३।१।९३ ) इति निषेधात् तिङ् तु न कृत्। तेन लादेशेषु तिङ् नोदाह्रियते॥

**दी—। "कमेरनिषेधः" (वार्त्तिक)। लक्ष्म्याः कामुको हरिः। अव्ययम्—जगत् सृष्ट्वा। सुखं कर्त्तुम्। निष्ठा—विष्णुना हता दैत्याः। दैत्यान् हतवान् विष्णुः। खलर्थाः—ईषत्करः प्रपञ्चो हरिणा। तृन् इति प्रत्याहारः—"लटः शतृशानचौ—" ( ३१००—३।२।१२४ ) इति तृशब्दारभ्य आ तृनो ( ३११५—३।२।१३५ ) नकारात्। शानन्—सोमं पवमानः। चानश्—आत्मानं मण्डयमानः। शतृ—वेदमधीयन्। तृन्—कर्त्ता लोकान्।**

The prohibition does not affect कम with उकञ् in non-scriptural writings. Thus लक्ष्म्याः &c. with षष्ठी in the अनुक्त कर्म as required by "कर्तृकर्मणोः—" (623). ( अव्यय ) जगत् &c. not जगतः and सुखस्य with षष्ठी। निष्ठा is the designation of क्त and क्तवतु। In विष्णुना &c. the क्त is in the कर्मवाच्य, hence the कर्त्ता is अनुक्त, so विष्णुना not विष्णोः। ( खलर्थ ) ईषत् &c. has खल् in the कर्मवाच्य, so the अनुक्तकर्त्ता is हरिणा not हरेः। तृन् is a general name here for all affixes begining with the तृ in "—शतृशानचौ—" ( 3100 ) and ending with the न् of "तृन्" (3115). Thus—( शानन् ) सोमं etc.

मित—। कमेरिति उकञ् विषये भाषायां षष्ठीनिषेधो न॥ प्रत्याहारस्य अवधिमाह तृशब्दात् इत्यादि। एतेन तृमात्रग्रहणात् शतुरग्रहणम्। शानच् गृह्यत एव, परं लादेशत्वात् प्रागेव गृहीतः सः। इतरे तु "पूङ्—" ( ३१०८—३।२।१२८ )

इति शानन्, "ताच्छील्य—" ( ३१०९—३।२।१२९ ) इति चानश्, "इङ्धार्य्योः—" ( ३११०—३।२।१३० ) इति शतृ, "तृन्" ( ३११५—३।२।१३५ ) इति तृन्, इति चत्वारः। इह्वायं शतृशब्दः प्रत्ययः, प्रागुक्तस्तु आदेशः इति भेदः। तत् वेदमधीयन्नित्यत्र अधीयन्निति परस्मैपदमिति न भ्रमितव्यम्। लादेशपक्षे एव आत्मनेपदपरस्मैपदव्यवस्था। अस्य तु शतुर्न तथा। एवं पवमानः मख्यमानः इत्यादिष्वपि नात्मनेपदसंज्ञाप्रसङ्गः॥

**दी—। "द्विषः शतुर्वा" ( वार्त्तिक )। मुरस्य मुरं वा द्विषन्। सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः। शेषे षष्ठी तु स्यादेव। ब्राह्मणस्य कुर्वन्। नरकस्य जिष्णुः।**

The prohibition of षष्ठी in connection with शतृ after द्विष् is optional. Thus मुरस्य etc.—The enemy of Mura. All this prohibition is of षष्ठी in कर्त्ता or कर्म regarded as कारक। If treated as शेष the षष्ठी is unavoidable. Thus ब्राह्मणस्य etc.—a worker for Brahmanas etc.

मित—। द्विषन् शत्रुः। "द्विषोऽमित्रे" ( ३१११—३।२।१३१ ) इति शतृप्रत्ययः न लादेशः। कारकषष्ठीति कर्त्तरि कर्मणि च षष्ठी। ब्राह्मणस्य कुर्वन्निति ब्राह्मणस्य किङ्कर इत्यर्थः। लादेश एषः॥

## ६२८। अकेनोर्भविष्यदाधमर्ण्ययोः॥ २।३।७०॥

**दी—। भविष्यति अकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात्। सतः पालकोऽवतरति। व्रजं गमी। शतं दायी।**

षष्ठी is prohibited in connection with अक implying futurity and इन् implying both futurity and indebtedness. Thus in सतः etc.—The protector of the good is being born—the protection is a future event, hence सतः in the plural of द्वितीया। In व्रजं etc.—bound for the dairy-farm—the reaching of the farm

is a future event, so व्रजम् not व्रजस्य। In शतं etc.—he has pay to pay a hundred—the payment is a future event; hence शतम् not शतस्य।

मित—। भविष्यति अर्थे आधमर्ण्ये च अर्थे विहितस्य अकप्रत्ययस्य इन्प्रत्ययस्य च योगे षष्ठी न स्यात् इति अक्षरार्थः। अकप्रत्ययस्तु आधमर्ण्ये न विहितस्तत् तस्य भविष्यदर्थ एवेह ग्राह्यः। तदाह भविष्यत्यकस्येत्यादि। अक इति "तुमुन्ण्वुलौ—" (३१७५—३।३।१०) इति विहितो ण्वुल्। इन् इति औणादिकस्य इनेः "आवश्यकाधमर्ण्ययोः—" (३३११—३।३।१७०) इति णिनेश्च ग्राहकः। पालक इति भविष्यति ण्वुल्। गमी इति "भविष्यति गम्यादयः" (३१७१—३।३।३) इति भविष्यति इनिः। गामीति पाठे बाहुलकाद्वृद्धिरिति नागेशः। दायीति आधमर्ण्ये णिनिः॥

## ६२९। कृत्यानां कर्त्तरि वा॥ २।३।७१॥

**दी—। षष्ठी स्यात्। मया मम वा सेव्यो हरिः। 'कर्त्तरि' इति किम्? गेयो माणवकः साम्नाम्। "भव्यगेय—" (२८९४—३।४।६८) इति कर्त्तरि यद्विधानात् अनभिहितं कर्म।**

The कर्त्ता optionally takes षष्ठी in connection with a कृत्य affix. Thus मया etc. Why say कर्त्तरि only? Witness गेयो etc.—the little fellow is chanting *Saman* hymns—where the कृत्य affix यत् in गेयः being in the कर्त्तृवाच्य by the rule "भव्यगेय—" (2894) the कर्म is undeclared. and always takes षष्ठी।

मित—। अनभिहिते इत्यस्ति। 'कृत्यानां' योगे अनभिहिते 'कर्त्तरि' षष्ठ्या विकल्पः, कर्मणि तु नित्यैव षष्ठी। गेयः साम्नां न तु सामानि अपि।

**दी—। अत्र योगो विभज्यते—"कृत्यानाम्"। 'उभयप्राप्तौ' इति 'न' इति चानुवर्त्तते। तेन—नेतव्या व्रजं गावः कृष्णेन॥ ततः "कर्त्तरि वा"। उक्तोऽर्थः।**

Here कृत्यानाम् has to be separated from its connection with the rest of the rule. Thus "कृत्यानाम्" becomes a rule by itself. With "उभयप्राप्तौ" ( 624—2. 3. 66 ) and "न" ( 627—2. 3. 69 ) following, this gives "उभयप्राप्तौ न कृत्यानाम्"—षष्ठी is not allowed if both कर्त्ता and कर्म remain अनुक्त in connection with a कृत्य affix. Thus नेतव्याः etc.—Krishna has to take the cattle to the farm. Here नेतव्याः has तव्य in the कर्मवाच्य, the प्रधानकर्म, which is गो, becoming उक्त। Both the कर्त्ता, *i. e.* कृष्ण, and the अप्रधान-कर्म, *i. e.*, व्रज are अनुक्त। Thus there is उभयप्राप्ति and षष्ठी being disallowed, the usual तृतीया in the अनुक्तकर्त्ता and द्वितीया in the अनुक्तकर्म appear. Next comes the remainder of the rule, *i. e*, "कर्त्तरि वा"। This is taken with "कृत्यानाम्" only and not with "उभयप्राप्तौ" and "न" also. The meaning is explained already.

मित—। योगविभागात् "कृत्यानाम्" इत्येकं सूत्रम्। अनुवृत्या सह "उभय-प्राप्तौ न कृत्यानाम्" इति भवति। कृत्यानां योगे कर्त्ता च कर्म च उभयं यदि अनुक्तं भवति तदा न कर्त्तरि षष्ठी नापि कर्मणि इति तस्यार्थः। उदाहरणे 'नेतव्याः' इति "प्रधाने नीहृकृष्वहाम्" ( २७६५, वा ) इति वचनात् प्रधाने कर्मणि तव्यः। तेन 'गावः' इति उक्तं भवति। कृष्णेन इत्यनुक्तः कर्त्ता, व्रजमिति अनुक्तं गुणकर्म। उभयत्र अनेन षष्ठी निषिध्यते॥ कृत्यव्यतिरिक्ते तु "गुणकर्मणि वेष्यते" ( ६२३, वा ) इति व्रजं व्रजस्य वा॥ "कर्त्तरि वा" इत्यंशे "उभयप्राप्तौ न" इति न संबध्यते, तेन मूलोक्त एवार्थः प्राप्तः॥

## ६३०। तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्॥ २।३।७२॥

दी—। तुल्यार्थैर्योगे तृतीया वा स्यात् पक्षे षष्ठी। तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा। अतुलोपमाभ्यां किम्? तुला उपमा वा कृष्णस्य नास्ति।

तृतीया alternates with षष्ठी in connection with words meaning तुल्य, equal. Thus तुल्यः etc. Why अतुलोपमाभ्याम्? Witness तुला etc. where the usual षष्ठी alone is allowed.

मित—। तुल उन्माने चुरादिः। कर्मणि करणे वा अप्रत्यये तोला इत्यनेन भाव्यम्, तुला इति तु भवति इहैव निपातनात्। तुलोपमाशब्दौ कर्मसाधनौ तुल्यार्थौ इति हरदत्तः। शेषे षष्ठी एव प्राप्ता, पक्षे तृतीया विधीयते। येन तुल्यं तत्र पाक्षिकी तृतीया, यत्तुल्यं तत्र तु प्रातिपदिकार्थे प्रथमा। तथाच सूत्रं "तेन तुल्यं क्रिया चेद्वतिः" (१७७८—५।१।११५)॥ इवादयस्तुल्यताया द्योतकाः, न हि 'तुल्य' इति तेषामर्थः। तेन गौरिव गवय इत्यादिषु इवादियोगे षष्ठी न भवति॥ उपपदविभक्तिरियम्॥

## ६३१। चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः॥ २।३।७३॥

दी—। एतदर्थैर्योगे चतुर्थी वा स्यात्, पक्षे षष्ठी आशिषि। आयुष्यं चिरञ्जीवितं कृष्णाय कृष्णस्य वा भूयात्। एवं मद्रं भद्रं कुशलं निरामयं सुखं शम् अर्थः प्रयोजनं हितं पथ्यं वा भूयात्। 'आशिषि' किम्? देवदत्तस्य आयुष्यमस्ति। व्याख्यानात् सर्वत्र अर्थग्रहणम्। मद्रभद्रयोः पर्य्यायत्वादन्यतरो न पठनीयः।

When a hope is expressed, चतुर्थी alternates with षष्ठी in connection with words meaning आयुष्य etc. Thus आयुष्यं etc.—May long life be assured unto Krishna. Similarly मद्रं etc. Why आशिषि? Witness देवदत्तस्य etc.—Devadatta has a long life—which expresses an accomplished fact and no hope, hence चतुर्थी is no longer available. These words have to be taken as giving *meanings* only, hence synonyms are included, that is

how the rule is interpreted. मद्र and भद्र are synonymous, hence one of them should be omitted.

मित—। शेषे षष्ठ्यां प्राप्तायां चतुर्थ्यर्थं वचनम्। देवदत्तस्य इत्यादि स्वरूप कथनमात्रं तत्र आशीरभावात् चतुर्थी न भवति॥

---

## सुबर्थप्रकरणे—सप्तमी

### ६३२। आधारोऽधिकरणम्॥ १।४।४५॥

दी—। कर्त्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञः स्यात्।

The कारक which is the indirect field of operation of a क्रिया through its कर्त्ता or कर्म on which the क्रिया directly operates, is called अधिकरण।

मित—। आध्रियते अस्मिन्नित्याधारः। कस्याधारः? क्रियायाः। कुतः? कारके इत्यधिक्रियते, कारकत्वञ्च क्रियाजनकत्वम्। एवमाक्षिप्ता क्रिया। तस्या एव आधारः॥ ननु क्रिया हि कर्त्तृनिष्ठा कर्मनिष्ठा वा। तत् कर्त्ता वा कर्म वा साक्षात् क्रियाया आधारः, किमेतदधिकरणमिति? सत्यं कर्त्तृकर्मणी एव क्रियाया मुख्य आधारः। यच्च पुनस्तयोरधिष्ठानं तदपि परम्परासम्बन्धेन क्रियाया आधार इत्युच्यते। तदेव अधिकरणम्। कर्त्तृकर्मणी एव द्वाः उपायः, तया 'कर्त्तृकर्मद्वारा' इत्यादि॥ 'कारके' इत्यनुवर्त्तते। तेन सह "कारके आधारोऽधिकरणम्" इति मिलितान्वयः। एतेन अधिकरणमपि कारकम्। तदाह 'आधारः कारकम्' इत्यादि॥

### ६३३। सप्तम्यधिकरणे च॥ २।३।३६॥

दी—। अधिकरणे सप्तमी स्यात्। चकाराद् दूरान्तिकार्थेभ्यः। औपश्लेषिको वैषयिकोऽभिव्यापकश्च इत्याधारस्त्रिधा। कटे आस्ते। स्थाल्या

पचति। मोक्षे इच्छास्ति। सर्वस्मिन्नात्मास्ति। वनस्य दूरे अन्तिके वा "दूरान्तिकार्थेभ्यः—" ( ६०५—२।३।३५ ) इति विभक्तित्रयेण सह चतस्रोऽत्र विभक्तयः फलिताः।

The seventh triad of case-affixes should be attached to an अधिकरण। The च in the rule attaches सप्तमी to words meaning far and near. आधार is of three kinds, arising from contact, from the subject-matter, from pervasion. Thus कटे etc.—sits on a mat ( contact ), स्थाल्यां etc.—cooks in a pan ( contact ), मोक्षे etc.—There is desire for salvation ( subject-matter ), सर्वस्मिन् etc.—Soul pervades everything ( pervasion ). An instance of दूरान्तिकार्थ is वनस्य etc. In this case four affixes are available including the three allowed by "दूरान्तिक—" ( 605—2. 3. 35 ).

मित—। 'दूरान्तिकार्थेभ्यः' इति पूर्वसूत्रादनुकृष्यते। इयञ्च प्रातिपदिकार्थे सप्तमी॥ श्लेषः संयोगः। उप समीपे श्लेषः उपश्लेषः। तेन निर्वृत्त औपश्लेषिकः। विषयः प्रतिपाद्योऽर्थः। तेन निर्वृत्तो वैषयिकः। अभिव्यापकः सर्वात्मसंयोगी॥ कटे आस्ते इत्यत्र आसनक्रियाया आधारः कर्त्ता देवदत्तः, तस्य चाधारः कटः। परम्परया क्रियाया अपि आधारः कट एव। स्थाल्यां पचतीत्यत्र पाकक्रियाया आधारस्तण्डुलाः, तेषाञ्चाधारः स्थाली। परम्परया तु क्रियाया आधारः स्थाली। आद्ये कर्त्रा उपश्लिष्टः कटः, द्वितीये कर्मणा उपश्लिष्टा स्थाली। मोक्षे इच्छा इति मोक्ष इच्छाया विषयः। सर्वस्मिन्नात्मा इत्यात्मना सर्वमभिव्याप्तमित्यर्थः॥

दी—। "क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्" ( वार्त्तिक )। अधीती व्याकरणे। अधीतमनेन इति विग्रहे "इष्टादिभ्यश्च" ( १८८८—५।२।८८ ) इति कर्त्तरि इनिः।

Of क्त, when it takes इनि, the कर्म will have सप्तमी। Thus अधीती etc.—Well-read in grammar. With the exposition अधीत-

मनेन the तद्धित affix इनि is attached by the rule "इष्टा—" ( 1888 ) to declare the कर्त्ता। The undeclared कर्म, which is व्याकरण, takes सप्तमी instead of द्वितीया।

मित—। 'क्त' इति क्तान्तं लक्ष्यते। इनो विषयः इन्विषयः। इनो विषयी यो क्तान्तशब्दः तस्य कर्मणि अनभिहिते सप्तमी स्यात्। कश्च इन्विषयः क्तः? य इष्टादिषु पठ्यते। अधीतशब्द इष्टादिः। भावे क्तः। अधीती इत्यधीतवान् कर्त्ता उच्यते। किमधीतं तेन इति तु न विवक्षितम्। तद्धितोत्पत्तेः परं व्याकरणमिति कर्म चेदुपस्थाप्यते तत् केन अभिधीयताम्? न तद्धितेन, तेन हि कर्त्ता उक्तः। नापि 'अधीत' इति क्तान्तेन, तत्तु भावमुक्त्वा तद्धितवृत्तौ अन्तर्भूतम्। तद्धितेन व्यवहितात्तस्मात् भावप्रत्ययं निष्काल्य कर्मसाधनस्य कथं क्रियतां योगः? एवमनभिहिते तस्मिन् कर्मणि "कृतपूर्वी कटम्" ( ६२३ ) इतिवत् द्वितीया प्राप्नोति। तदपवादः सप्तमी॥ ननु कृतपूर्वी कटे इति कथं न भवति? उच्यते—कृतपूर्व शब्दः इन्विषयः सत्यं, न त्वसौ क्तान्तः इति सप्तमी न भवति॥

दी—। "साध्वसाधुप्रयोगे च" ( वार्त्तिक )। साधुः कृष्णो मातरि असाधुर्मातुले।

सप्तमी should be affixed in connection with साधु and असाधु। Thus साधुः etc.

मित—। क्रियाया अभावात् शेषषष्ठ्यां प्राप्तायां वचनम्॥ "साधुनिपुणाभ्याम्—" ( ६४०—२।३।४३ ) इति अर्चायां सिद्धा सप्तमी। वार्त्तिकमिदमनर्चार्थम्॥ मातुलः कंसः॥ इह साध्नोतीति साधुः। यः साधुः स साधनक्रियायाः कर्त्ता। यस्मिन् साधुस्तच्चाधिकरणं तस्याः इति केचित् वार्त्तिकं प्रत्याचक्षते॥

दी—। "निमित्तात् कर्मयोगे" ( वार्त्तिक )। निमित्तमिह फलम्। योगः संयोगसमवायात्मकः।

"चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥"

**हेतौ तृतीया प्राप्ता। सीमा अण्डकोशः। पुष्कलको गन्धमृगः। 'योगविशेषे' किम्? वेतनेन धान्यं लुनाति।**

If the निमित्त of an undertaking is connected with the कर्म it takes सप्तमी। Here निमित्त is the object, the reward &c. योग is contact or समवाय। Thus—"The leopard is killed for its skin, the elephant for the tusks, the *chowrte* deer for the *chowrie* and the musk-deer (or civet-cat) for its sac." Here the leopard &c. are the कर्म, the skin &c. are what attract the hunter—the reward of the hunt—the निमित्त; this निमित्त again is connected with the कर्म; *i. e.*, the leopard &c.; hence चर्मणि &c. in the सप्तमी। Evidently तृतीया was expected by the rule "हेतौ" (568—2. 3. 23) but is ousted by this Varttika. सीमा is scrotum. पुष्कलक is the musk-deer or, better, civet-cat. Why mention particular kinds of योग? Witness वेतनेन &c.—reaps corn because paid for it. Here the wages received have connection with the corn, no doubt, but the connection is neither contact nor समवाय। Hence वेतनेन in the तृतीया as usual.

मित—। 'निमित्तं' क्रियाफलं यदर्थः क्रियारम्भः। क्रियाफलवाचकात् शब्दात् सप्तमी स्यात्, यदि फलं क्रियायाः कर्मणा युक्तं स्यात्। हेतुतृतीयापवादः। 'संयोगः' संश्लेषः। द्रव्येण, सापेक्षस्य द्रव्यस्य गुणकर्मादीनां वा, सम्बन्धः 'समवायः'। 'चर्मणि' व्याघ्रचर्म मे स्यादिति हेतोः, 'दन्तयोः' गजदन्तौ मे स्यातामिति, 'केशेषु' चामरं मे स्यादिति, 'सीम्नि' मृगनाभिः गन्धद्रव्यविशेषो वा मे स्यादिति सर्वत्र कर्त्ता तेन तेन क्रियाफलेन युज्यते॥ वेतनं धान्येन न संयुक्तं नापि समवेतमिति हेतुतृतीया एव भवति॥ इह भाष्ये 'कर्मसंयोगे' इत्येव पाठः। वृत्तावपि स एव। तथा न्यासे, भाषावृत्तौ, कैयटेऽपि। हरदत्तस्तु "कर्मयोगे" इति पाठं परिकल्प्य समवायमपि इहैव व्याख्यत्। तदेवादृतं दीक्षितेन तद्व्याख्यातृभिश्च। नैतदभिमतमिवाभाति भगवतो

भाष्यकारस्य। यद्यभिमतं, किमिति तेनैव नोक्तं "कर्मयोगे" इति? किमर्थं वा "कर्मसंयोगे" इति गुरुनिर्देशः कृतः? अथोच्यते संयोग इत्युपलक्षणं समवायस्यापि तदपि तर्हि किं न स्फुटमुक्तं तेन? किं वा भवतापि "योगे" इति पाठान्तरं कल्पितम्? अनुक्तमपि गम्यत एव पाठान्तरञ्च जड़बुद्धेरुपकृतये इति चेत्, अस्तु, परम् उदाहरणेषु संयोगसमवाययोर्व्यामिश्रत्वे को हेतुः? न हि दुष्परिहरा व्यामिश्रता। "केशेषु चमरीं हन्ति दन्तयोर्हन्ति कुञ्जरम्। चर्मणि द्वीपिनं हन्ति सीम्नि पुष्कलको हतः॥" इति पादव्यत्यासेन सुकरः परिहारः। किञ्च यद्रि समवायस्य प्रकृष्टमुदाहरणम्, जातिगुणक्रियाणां द्रव्येण सम्बन्ध इति, तदेवेह कथं परिहृतम्? एतच्च चिन्तितं हरदत्तेनापि। अतएव तेन "पुष्कलकः शङ्कुः, स सीम्नि सीमाज्ञानार्थं हतो निखातः" इत्युच्छृङ्खलं व्याख्याय समवायपक्षे नीतश्चरमः पादः। तत्तु दीक्षितादिभिर्न सोढ़म्॥ ननु चर्मद्वीपिनोः सीमपुष्कलकयोश्च सम्बन्धः समवाय एव, तत् यदि समवायो नेष्टः कथमेताविह उदाहृतौ भाष्ये? उच्यते—संयोग इत्यत्र समिति प्रकर्षे। तेन प्रकृष्टो योगः संयोगः। कश्च प्रकृष्टो योगः? यः साक्षादुपलभ्यते चाक्षुषो योगः, द्रव्ययोर्योगः। यो हि अनुमीयते योगः, जातिगुणक्रियाणां द्रव्येण, तस्येह न ग्रहणम्। तेन सुस्थितानि उदाहरणानि॥

## ६३४। यस्य च भावेन भावलक्षणम्॥ २।३।३७॥

**दी—। यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात्। गोषु दुह्यमानासु गतः।**

सप्तमी is attached to one whose क्रिया indicates another क्रिया। Thus गोषु &c.—He left while the cows here being milked. Here 'milking' is in गो and it indicates गमनक्रिया। Hence गो takes सप्तमी। Whose क्रिया = क्रिया in whom. क्रिया may be in a कर्त्ता or a कर्म। The example is of one in a कर्म। Here is one in a कर्त्ता—ब्राह्मणेषु अधीयानेषु गतः, left when the Brahmanas were at study.

मित—। भवः क्रिया, तस्य लक्षणं सूचनम्। 'यस्य क्रियया' इति क्रियाया आधारो लक्ष्यते। यन्निष्ठया क्रियया इत्यर्थः। क्रिया च कर्तृनिष्ठा कर्मनिष्ठा वा॥ 'क्रियान्तरम्' इति अप्रसिद्धा अन्या क्रिया। प्रसिद्धमेव अप्रसिद्धं लक्षयति न तु अप्रसिद्धं प्रसिद्धम्। कर्तृस्था कर्मस्था वा प्रसिद्धा काचित् क्रिया यदि क्रियान्तरं लक्षयति, तदा तस्मिन् कर्त्तरि कर्मणि वा सप्तमी भवति। गोषु इति कर्मस्था क्रिया। कर्तृस्थायास्तु ब्राह्मणेषु अधीयानेषु गतः इत्याद्युदाहरणम्॥

दी—। "अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च" (वार्त्तिक)। सत्सु तरत्सु असन्त आसते। असत्सु तिष्ठत्सु सन्तस्तरन्ति। सत्सु तिष्ठत्सु असन्तस्तरन्ति। असत्सु तरत्सु सन्तस्तिष्ठन्ति।

सप्तमी is attached to express the agency of the deserving, its denial to the undeserving, and also to express the reverse. Thus सत्सु तरत्सु &c.—the bad stay, the good cross over. Here the good deserve to cross over, hence सत्सु in the सप्तमी। Again असत्सु तिष्ठत्सु &c.—The good cross over, the bad stay. In this the bad do not deserve to cross over, hence असत्सु in in the सप्तमी। Similarly सत्सु &c.

मित—। यो यां क्रियां कर्तुमर्हति स तस्याः क्रियाया अर्हः। तस्य कर्तृता सप्तमीवाच्या, अनर्हाणामकर्तृता च तथा, अर्हाणामकर्तृता अनर्हाणां कर्तृता च तथैव॥ तरणक्रियायां सन्तः अर्हा असन्तः अनर्हाः। सत्सु तरत्सु असन्त आसते इत्यस्य सन्तस्तरन्ति असन्त आसते इत्यर्थः। एवम् असन्तस्तिष्ठन्ति सन्तस्तरन्ति इत्यर्थे असत्सु तिष्ठत्सु इत्यादि। सन्तस्तिष्ठन्ति असन्तस्तरन्ति इत्यर्थे सत्सु तिष्ठत्सु इत्यादि। असन्तस्तरन्ति इत्याद्यर्थे असत्सु तरत्सु इत्यादि॥ यदा सन्तस्तरन्ति तदा असन्त आसते इत्यादि तु नार्थः। तथा सति सूत्रेणैव सिध्यति वार्त्तिकं व्यर्थं भवति॥

## ६३५। षष्ठी चानादरे॥ २।३।३८॥

दी—। अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः। रुदति रुदतो वा प्राव्राजीत्। रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः।

षष्ठी and सप्तमी are available in the कर्त्ता or कर्म when, over and above the indicating of a क्रिया, disregard, indifference, &c. are implied. Thus रुदति &c. the sense being that he renounced the world disregarding his weeping child &c.

मित—। भावस्य क्रियाया लक्षणं सूचनं भावलक्षणम्। तस्मिन् षष्ठी च सप्तमी च भवतः आदरस्य उपेक्षाया आधिक्ये सति, भावलक्षणात् व्यतिरिक्तो यदि अनादरः स्यादित्यर्थः। केवले भावलक्षणे सप्तमी एव विहिता, अनादरयुक्ते भावलक्षणे तु षष्ठी अपि विधीयते॥ अधिकमिति भावलक्षणापेक्षया अधिकम्॥

## ६३६। स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च॥ २।३।३९॥

दी—। एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः। षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम्। गवां गोषु वा स्वामी। गवां गोषु वा प्रसूतः, गा एवानुभवितुं जात इत्यर्थः।

षष्ठी and सप्तमी are attached to what is connected with स्वामिन्, ईश्वर, अधिपति, दायाद, साक्षिन्, प्रतिभू, प्रसूत। षष्ठी alone was available, the rule gives सप्तमी as an alternative. Thus गवां &c.—the owner of cows. Also गवां &c. which means "Born to receive cows as his inheritance."

मित—। 'स्वामी' 'ईश्वर' 'अधिपति' इति पर्यायग्रहणं पर्यायान्तरनिवृत्त्यर्थम्॥ दायमादत्ते इति दायादः। अस्मादेव निपातनात् सोपसर्गेऽपि कः। गोरूपं दायमादत्ते इति गवां दायादः॥ प्रतिभवति इति प्रतिभूः लग्नकः परस्यार्थे आत्मसमर्पकः। कर्त्तरि क्विप्। शेषे षष्ठी प्राप्ता, वचनात् सप्तमी च भवति। अनुभवितुम् निजांशत्वेन लब्धुम्। गाव एव तस्य पैतृकं धनं नान्यत् किञ्चित् इत्यर्थः॥

## ६३७। आयुक्तकुशलाभ्याञ्चासेवायाम्॥ २।३।४०॥

दी—। आभ्यां योगे षष्ठीसप्तम्यौ स्तः तात्पर्य्ये अर्थे। आयुक्तो

व्यापारितः। आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा। 'आसेवायाम्' किम्? आयुक्तो गौः शकटे, ईषद्युक्त इत्यर्थः।

In connection with आयुक्त and कुशल, the sixth and seventh case-affixes are attached if "engrossing attention" is implied. आयुक्त means 'engaged', 'employed' &c. Thus आयुक्तः &c.—Engaged in the worship of Hari, clever in the worship of Hari. Why आसेवायाम्—engrossing attention? Witness आयुक्तो &c.—The bullock is loosely yoked to the cart—where आयुक्त means ईषद्युक्त।

मित—। आ सम्यक् युक्त आयुक्तो व्यापारितः, नियुक्त इत्यर्थः। कुशलो निपुणः। आ सम्यक् सेवा आसेवा एकपरायणता, तत्परता। एतदेव तात्पर्य्यमित्युक्तं वृत्तौ॥ इह अधिकरणे सिद्धा एव सप्तमी, षष्ठी तु पक्षे विधीयते। कुशलशब्दे क्रियाया अभावात् शेषे षष्ठ्यां प्राप्तायां पक्षे सप्तमीविधिः इति तु केचित्॥

६३८। यतश्च निर्द्धारणम्॥ २।३।४१॥

दी—। जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं यतः ततः षष्ठीसप्तम्यौ स्तः। नृणां नृषु वा ब्राह्मणः श्रेष्ठः। गवां गोषु वा कृष्णा बहुक्षीरा। गच्छतां गच्छत्सु वा धावन् शीघ्रः। छात्राणां छात्रेषु वा मैत्रः पटुः।

The singling out of a part from the whole through its possession of some exclusive characteristic which the remainder does not possess, is निर्द्धारण। The part may be identified as belonging to a particular class, or having some particular virtue or action or designation. The whole will then take षष्ठी or सप्तमी। In नृणाम् &c., a class, viz. Brahmanas,

is separated from the entire body of men as pre-eminently possessing excellence ( श्रेष्ठत्व )। The separation is effected through the possession of excellence and the possessor is identified by his caste. In गवाम् &c. the basis of separation is बहुक्षीरता and the part separated is identified by its गुण। In गच्छताम् &c. the निर्द्धारण is through शीघ्रता and the part separated is identified by its धावनक्रिया। In छात्राणाम् &c. the निर्द्धारण is made by पटुत्व and the identification by मैत्रसंज्ञा। In all these it is the *exclusive characteristic* that first draws our attention to the part. This characteristic forms the basis of separation—निर्द्धारणहेतु। The enquiry, as to the *nature* of the part separated, comes later on and we have then to see, only to help our memory, if the part has to be identified by its जाति, गुण, क्रिया or संज्ञा। जाति &c. are thus evidently *not* at all the करण or हेतु of निर्द्धारण। The language of the Vritti is a bit awkward.

मित—। इह 'जातिगुणक्रियासंज्ञाभिः' इति पृथक्करणे न करणं नापि हेतुर्निर्द्दिश्यते। 'विशिष्टस्य' इत्यध्याहृत्य एवमन्वयः कार्य्यः—जातिगुणक्रियासंज्ञाभिर्विशिष्टस्य एकदेशस्य समुदायात् पृथक्करणं निर्द्धारणम्। तच्च निर्द्धारणं यतः समुदायात् भवति ततः समुदायात् षष्ठीसप्तम्यौ स्तः॥ नृणामित्यत्र ब्राह्मणजातिविशिष्टा जना नृसमुदायात् पृथक्कृत्य श्रेष्ठेषु अन्तर्भाविताः। गवामित्यत्र कृष्णगुणविशिष्टाः गोसमुदायात् पृथक्कृत्य बहुक्षीरासु अन्तर्भाविताः। गच्छतामित्यत्र धावनक्रियाविशिष्टाः गच्छत्समुदायात् पृथक्कृत्य शीघ्रेषु अन्तर्भाविताः। छात्राणामित्यत्र मैत्रसंज्ञाविशिष्टः छात्रसमुदायात् पृथक्कृत्य पटुषु नीतः। आद्ये 'नृ' इति समुदायः 'ब्राह्मण' इत्येकदेशः, श्रेष्ठत्वगुणयोगो निर्द्धारणहेतुः॥ द्वितीये बहुक्षीरतागुणयोगो निर्द्धारणहेतुः, तृतीये शीघ्रत्वगुणयोगः, चतुर्थे पटुत्वगुणयोगः॥ यतो निर्द्धार्य्यते, यश्च निर्द्धार्य्यते, यश्च निर्द्धारणहेतुः इत्येतत्त्रितयसन्निधाने एव निर्द्धारणं भवति नान्यथा॥

६३९। पञ्चमी विभक्ते ॥ २।३।४२ ॥

दी—। विभागो विभक्तम्। निर्द्धार्य्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात्। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः।

विभक्त means विभाग difference, distinction. If the whole and the part have nothing in common and are essentially distinct, पञ्चमी is to be attached. Thus माथुराः &c.—The people of Mathura are richer than those of Pataliputra.

मित—। विभक्तमिति भावे क्तः। तदाह विभक्तं विभागः भेद इत्यर्थः। यतश्च निर्द्धारणमिति वर्त्तते। 'यत्र' यस्मिन् निर्द्धारणे 'निर्द्धार्य्यमाणस्य' वस्तुनः शिष्टापेक्षया 'भेद एव' प्रतीयते न साम्यं 'तत्र' तस्मिन् निर्द्धारणे प्राग्विहितयोः षष्ठीसप्तम्योरपवादः 'पञ्चमी स्यात्'। पृथक्कृते एकदेशे सर्वत्र निर्द्धारणे भेदः प्रतीयते, यत्र तु पृथक्करणात् प्रागपि भेद एव स इह विषयः। माथुरपाटलिपुत्रकौ भिन्नाविव ॥

६४०। साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥ २।३।४३ ॥

दी—। आभ्यां योगे सप्तमी स्यादर्चायाम्। न तु प्रतेः प्रयोगे। मातरि साधुर्निपुणो वा। 'अर्चायाम्' किम्? निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्य्यम्।

सप्तमी is attached in connection with साधु and निपुण if praise is implied; but not if प्रति occurs in the sentence. Thus मातरि &c.—good or clever with respect to his mother. Why say अर्चायाम्? Witness निपुणः &c.—A servant clever with respect to the king. This is a mere statement of fact and implies no appreciation of the servant 's work. Hence षष्ठी as expected, no सप्तमी।

मित—। शेषषष्ठ्यां प्राप्तायां वचनम् ॥ ये तु क्रियामिह पश्यन्ति, तेषाम्

अधिकरणत्वादेव सिद्धे नियमार्थं वचनम्— अर्चायामेव सप्तमी नान्यत्र। प्रत्युदाहरणे निपुणशब्दमेव गृह्णाति, साधुशब्दयोगे अर्चां विनापि सप्तमीविधानात् (६३३, वा— )। 'राज्ञो निपुणः' इत्यन्वयः। शेषे षष्ठी। 'तत्त्वकथने' स्वरूपवर्णने। 'तात्पर्य्यम्' आग्रहः। अप्रतेः इति प्रयोगापेक्षया षष्ठी। तदाह 'प्रतेः प्रयोगे' इति॥

दी—। "अप्रत्यादिभिरिति वक्तव्यम्" ( वार्त्तिक )। साधुर्निपुणो वा मातरं प्रति परि अनु वा।

The prohibition regarding प्रति should be extended to परि and अनु also. Thus साधुः &c. where प्रति &c. being कर्मप्रवचनीय the second case affix is attached.

मित—। "लक्षणेत्थम्भूत—" ( ५५२—१।४।९० ) इत्यत्रोक्ताः प्रतिपर्य्यनवः प्रत्यादयः। प्रत्यादिभिर्य्योगे साधुनिपुणयोगे सत्यपि अर्चायामपि सप्तमी न इत्यर्थः। मातरमिति कर्मप्रवचनीययोगे द्वितीया॥ सूत्रे अप्रतेरित्यनुक्तौ अर्चायामियं सप्तमी परत्वात् प्रत्यादियोगजन्यां कर्मप्रवचनीयद्वितीयां बाधेत। अनर्चायां साधुयोगे विहितैव सप्तमी, निपुणयोगे तु शेषत्वात् षष्ठी भवति—निपुणो राज्ञो भृत्यः। प्रत्यादियोगे पुनः कर्मप्रवचनीय द्वितीया शेषषष्ठीं बाधते॥

## ६४१। प्रसितोत्सुकाभ्यां तृतीया च॥ २।३।४४॥

दी—। आभ्यां योगे तृतीया स्यात्। चात् सप्तमी। प्रसित उत्सुको हरिणा हरौ वा।

तृतीया should be attached in connection with प्रसित and उत्सुक। The च allows सप्तमी also. Thus प्रसितः &c.—cares much for Hari.

मित—। प्रसित आसक्तः। उत्सुक इष्टार्थोद्युक्तः। एताभ्यां योगे अधिकरणे तृतीयासप्तम्यौ भवतः।

## ६४२। नक्षत्रे च लुपि॥ २।३।४५॥

दी—। नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य अर्थः तत्र वर्त्त-

मानात् तृतीयासप्तम्यौ स्तः अधिकरणे। "मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्"—मूले श्रवणे इति वा। 'लुपि' किम्? पुष्ये शनिः।

If from a word meaning 'star' some affix is dropped by the injunction लुप्, the resultant, when used as an अधिकरण, will have तृतीया or सप्तमी। Thus मूलेन &c.—The goddess should be invoked when the Moon is in मूल and immersed when in श्रवण। Why say लुपि? Witness पुष्ये &c.—Saturn is in पुष्य—where no affix has been attached and dropped, consequently सप्तमी alone is available in the अधिकरण।

मित—। नक्षत्रे इति भावे सप्तमी। लुप्शब्द इह लुप्संज्ञया लुप्यमानस्य प्रत्ययस्य अर्थम् अभिदधाति। नक्षत्रवाचिनी प्रकृतिः, लुप्तस्य लुप्संज्ञया प्रत्ययः, तेन योऽर्थो जातः तस्मिन्नर्थे वर्त्तमानात् शब्दात् अधिकरणे तृतीयासप्तम्यौ स्तः इति सरलार्थः। इयं हरदत्तानुसारिणी व्याख्या। इत्थं वा व्याख्यायताम्—'लुपि' सति, लुप्संज्ञया प्रत्ययलोपे सति, यत् 'नक्षत्र' तस्मिन्, या नक्षत्रवाचिनी प्रकृतिः शिष्यते तस्याम्, अधिकरणे तृतीयासप्तम्यौ स्तः। प्रागुक्त एवार्थः॥ 'मूलेन' 'श्रवणेन' इति मूलश्रवणशब्दाभ्यां नक्षत्रवाचकाभ्यां "नक्षत्रेण युक्तः कालः" (१२०४—४।२।३) इत्यण्। तस्य "लुबविशेषे" (१२०५—४।२।४) इति लुप्। ततो लब्धौ मूल-श्रवणशब्दौ मूलश्रवणयुक्ते काले वर्त्तमानौ। अधिकरणे तृतीया॥ 'पुष्ये शनिः' इत्यत्र न हि कश्चित् प्रत्ययो लुप्तः। तेन अधिकरणे यथाप्राप्ता सप्तम्येव न तृतीया॥ 'अधिकरणे' किम्? अद्य पुष्यः॥ 'नक्षत्रे' किम्? वङ्गेषु तिष्ठन्ति। इह जनपदे लुप् न नक्षत्रे। तेन सप्तम्येव न तृतीया॥

## ६४३। सप्तमीपञ्चम्यौ कारकमध्ये ॥ २।३।७॥

दो—। शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामेते स्तः। अद्य भुक्त्वा अयं द्व्यहे द्व्यहाद्वा भोक्ता। कर्त्तृशक्त्योर्मध्येऽयं कालः। इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्। कर्त्तृकर्मशक्त्योर्मध्येऽयं देशः।

Time and space, limited by the field of operation of two *Karakas*, take सप्तमी and पञ्चमी। Thus अद्य &c.—Having breakfasted to-day he will eat again after two days. Here the कर्त्ता operates to-day and again after two days; the interval of time between the two operations has पञ्चमी and सप्तमी। Again इहस्थः &c.—standing here he can hit the mark a *Krosa* away. Here is an interval of space between the कर्त्ता and the कर्म which is लक्ष्य।

मित—। "कालाध्वनोः—" ( ५५८—२।३।५ ) इत्यतः 'कालाध्वनोः' इत्यनुवर्त्तते पञ्चम्या च विपरिणम्यते। "कालाध्वभ्यां सप्तमीपञ्चम्यौ कारकमध्ये" इत्यन्वयः। कारकाणां शक्तिरस्ति, तत एव तेषां कारकत्वम्। शक्तिशक्तिमतोरभेदे 'कारकमध्ये' इति 'शक्तिद्वयमध्ये' इत्यर्थः॥ 'अद्य' इत्यादिषु एक एव कर्त्ता, शक्तिस्तु भिद्यते। एकया अद्य भुङ्क्ते अपरया च द्व्यहे। एवं द्वे ते सिद्धे तयोरन्तवर्त्तो कालो लभ्यते। 'इहस्थः' इत्यादिषु अवस्थानशक्तिः कर्त्तुः, द्विधाभवनशक्तिः कर्मणः, इत्येतयोर्मध्ये देशः॥

**दी—। अधिकशब्देन योगे सप्तमीपञ्चम्यौ इष्येते। "तदस्मिन्नधिकम्—" (१८४६—५।२।४५) इति "यस्मादधिकम्—" ( ६४५—२।३।९ ) इति च सूत्रनिर्देशात्। लोके लोकाद्वा अधिको हरिः।**

Panini wants both सप्तमी and पञ्चमी in connection with अधिक because he himself writes "तदस्मिन्नधिकम्—" with सप्तमी and again "यस्मादधिकम्—" with पञ्चमी। Thus लोके &c.—Hari transcends the universe.

मित—। यदधिकं तस्य यदा समुदाये अन्तर्भावस्तदा अधिकरणे सप्तमी। एकादश अधिका अस्मिन् शते। यदा न, तदा ल्यब्लोपे कर्मणि पञ्चमी। शतात् सहस्रमधिकमिति शतमपेक्ष्य इत्यर्थः। एवं कृत्वा लक्षणेनैव सिध्यतः सप्तमीपञ्चम्यौ॥

६४४ । अधिरीश्वरे ॥ १।४।९७ ॥

दी—। स्वस्वामिभावसम्बन्धे अधिः कर्मप्रवचनीयसंज्ञः स्यात् ।

अधि is a कर्मप्रवचनीय when it expresses the relation "master and man", "owner and owned." &c.

मित—। इह स्वस्वामिभावसम्बन्धस्य द्योतकोऽधिः ।

६४५ । यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ २।३।९ ॥

दी—। अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात् । उप परार्धे हरेर्गुणाः—परार्द्धादधिका इत्यर्थः । ऐश्वर्य्ये तु स्वस्वामिभ्यां पर्य्यायेण सप्तमी । अधि भुवि रामः—अधि रामे भूः । "सप्तमी शौण्डैः" ( ७१७—२।१।४० ) इति समासपक्षे तु रामाधीना । "अषडक्ष—" ( २०७९—५।४।७ ) इत्यादिना खः ।

In connection with a कर्मप्रवचनीय implying excess or the relation "owner and owned" सप्तमी is attached to that which is exceeded and to that in respect to which mastery is stated. Thus उप &c.—Hari's virtues exceed a परार्द्ध in number. In the case of mastery, the owner and the owned take सप्तमी by turns. Thus अधि &c.—Rama is the master of the Earth. If रामे अधि is compounded by the rule "सप्तमी शौण्डैः" the form is रामाधीना with ख attached by "अषड्क्ष—" ।

मित—। सप्तमी स्यादिति द्वितीयापवादः । "उपोऽधिके च" ( ५५१—१।४।८७ ) इति कर्मप्रवचनीयत्वे "यस्मादधिकम्—" इति सप्तमी । "यस्य चेश्वरवचनम्" इति 'यस्य' स्वामिनः सम्बन्धे 'ईश्वरः' इति 'वचनं' निर्देशो भवति, य ईश्वर इति कथ्यते तद्वाचकात् सप्तमी । यद्वा—'यस्य' स्वस्य 'ईश्वरवचनं' स्वामिनिर्देशः क्रियते तद्वाचकात् सप्तमी । एवमर्थद्वयस्य सन्देहे उभयथापि भवति । तदाह पर्य्यायेण सप्तमीति । स्वस्वामिनोरेकत्र सप्तमी अन्यत्र प्रातिपदिकार्थमात्रे प्रथमा । अधिशब्दः शौण्डादिषु पठ्यते । अधुात्तरपदान्नित्यं खः स्वार्थे ॥

